Ist. EDITION 1000 COPIES

श्रीगुरु अवधूत!



# श्रीमाणिक्यविजयः

( प्र थ म भा गः )

भक्तकार्यकल्पद्रुमादि बिरुदांकित
[illegible]द्गुरु मार्तंडमाणिक्यप्रभु प्रेरणया
[illegible]ागर कविता सांबशास्त्रिणा
विरचिता

[illegible]ति पालकोंड रामचंद्रशर्मणा
स्वकीय श्रीमाणिक्यप्रभुमुद्रणालये
मुद्रापयित्वा प्रकटीकृतश्च

[illegible] सं (शा. श. १८४९) मार्गशीर्ष
[illegible] १९२७ [Rs. 0-12-0



MANIKYAPRABHU PRESS, SANKARAGIRI



# विषयानुक्रमणिका

"भक्तकार्यकल्पद्रुमादि विरुदांकित"



श्रीसद्गुरु मनोहरमाणिक्यप्रभुमहाराजा

"भक्तकार्यकल्पद्रुमादिबिरुदांकित"



श्रीसद्गुरु मार्तांडमाणिक्यप्रभुमहाराज

# पीठिका

श्रीमाणिक्यप्रभुमहाराजाय नमः

श्लो. यः पूर्वं कलिदोषनाशनकृते देवर्षिसंप्रार्थितः
श्रीमद्रत्नगिरौ मनोहरसतीगर्भांबुधौ रत्नवत्
दत्तः सर्वमतप्रकाशकगुरुर्माणिक्यनाम्नोदभूत्
भक्ताभीष्टसुरद्रुमः प्रभुवरः कुर्यात् स वो मंगलम्.

अथ खलु भगवान्, दत्तात्रेयो, निरतिशयानन्दयुक्तो, नित्यमुक्तस्वभावः संप्राप्तसकलकामः, परमकारुणिकस्वरूपः, सर्वेश्वरः कलावनाघ्रातनिजमहिमगंधान् भवजलधिमहावर्तगर्तंबंभ्रम्यमाणान्, जनानुद्दिधीर्षुर्मध्यमलोके मणिगिरौ माणिक्यप्रभुरूपेणावतीर्य स्वातिशयमहिमावभासिकाः, भवजलधितरणीभूताः दर्शयामासलीलाः तदवबोधकचरित्राणि, तत्पदायत्तचित्तैः, हरिविधिशिवगणपतिबृहस्पतिवासवदुर्वासोंऽशसंभूतैः, बालचन्द्रश्रीनिवासविठ्ठलहनुमदादि नामधेयैः, परमभक्तैः संस्कृतमाणिक्यमयूखाभिधपुराणेन प्राकृतपद्यरीत्या, वचनरूपेण रचयन्नपि सम्यक्प्रकटितान्यभवन्.

तथापि, तानि, पदपद्यवचनेतिहासरूपाणि, दुरवगमाभि प्रायाणि, क्वचित् पूर्णानि, क्वचिदसंपूर्णा, न्यगीर्वाणवाणीनिबद्धानि चालोक्य श्रीप्रभुवंशदुग्धाब्धिचंद्रमाः, तत्सेवावंदनसमधिगतध्यान धारणसमाध्यादिभिर्जितकामोऽपि संपूर्णकामः, कृतवितंडदुर्मतखंड श्रीमन्मार्तांड प्रभुवरः श्रद्धावत्सु, केषुचित्परमभक्तेषु विरळायमानानि, श्रीप्रभुवरचरित्रपुस्तकान्यानीय "श्रद्धावतामखिलानां श्रवणादिसकल पुरुषार्थसाधनार्थमिमान्यशेषपुस्तकानि संशोध्य संस्कृतप्रबंधात्मना माणिक्यविजयस्त्वया रचनीय," इतिसानुग्रहंतान्यशेषपुस्तकानि मह्य मदात्. विद्वज्जनविधेयेन, श्रीमाणिक्यपदकिंकरेण मया, तत्प्रेरणया, तानि संशोध्य यथामति विरचितोऽयं माणिक्यविजयाख्यो ग्रंथः.

मयापि महताप्रयत्नेन किंचिदप्यजानता, अनभ्यस्तशास्त्र जाले, नानुपासितगीर्वाणभाषाचातुरीधुरीणेन केवलं माणिक्यप्रभु चरणभक्त्या विरचितं माणिक्यविजयं, ब्रह्मांडपुराणकथानुसृतं, दीन वत्सलसंवादरूपं समालोक्य गुणमेव पराम्रशंतः संतः संतुष्यंतु :—

"गुणदोषौ बुधो गृह्णन्निंदुक्ष्वेळाविवेश्वरः;
शिरसा श्लाघते पूर्वं परं कंठे नियच्छति".

—इति सर्वेभ्यो महद्भ्यो नमः

रामसागर कविता सांबशास्त्रि.

(सकलमताचार्य)



श्रीमाणिक्यप्रभोः समाधिः

(सकलमताचार्य)

"भक्तकार्यकल्पद्रुमादि विरुदांकित"



शुद्धसत्त्व 'चतुर्थदत्तावतार'

श्रीसद्गुरु माणिक्यप्रभुमहाराजा





श्रीगुरुभ्यो नमः.

# ‘माणिकरायनपादगळे गति’.

(पुष्पमालिकाबंधः)

धीमासीमार्थिमान्यो गुणिमणिप्रणिधिः श्रीकरैकप्रकल्पो
धीराधारामराढ्योऽव्ययभयजयदो ध्यानगानप्रनम्रः
श्रीपालापाब्जपादः सदमदहृदयस्त्यागयोगप्रगल्भः
कालेऽकाले फलेच्छूर्न्निगमगणगतिः पाति नीतिप्रतिष्ठः.

व्याख्या

धीमासीमार्थिमान्यः :—धियः सकलविद्याकुशलमतयः, माश्च धनकनकाद्यशेषसंपदश्च, धीमाः, तासां सीमा पारं, येषां ते धीमासीमाः, अर्थिनो याचकाः, तैर्मान्यः मानितुं योग्यः; अनेन सर्वविद्वद्राजसेवनीय इत्यर्थः; किंच, “गुरुसार्वभौमत्वं”, “श्रीमद्राजाधिराजत्वं” च सूचितं भवति—अत्र बंधस्थमध्यवर्णौ ‘मा’ इति.

(सकलमताचार्य)

"भक्तकार्यकल्पद्रुमादि विरुदांकित"



शुद्धसत्त्व 'चतुर्थदत्तावतार'

श्रीसद्गुरु माणिक्यप्रभुमहाराजा





श्रीगुरुभ्यो नमः.

# ‘माणिकरायनपादगळे गति’.

(पुष्पमालिकाबंधः)

धीमासीमार्थिमान्यो गुणिमणिप्रणिधिः श्रीकरैकप्रकल्पो
धीराधारामराढ्योऽव्ययभयजयदो ध्यानगानप्रनम्रः
श्रीपालापाब्जपादः सदमदहृदयस्त्यागयोगप्रगल्भः
कालेऽकाले फलेच्छूच्छिन्निगमगणगतिः पाति नीतिप्रतिष्ठः.

व्याख्या

धीमासीमार्थिमान्यः :—धियः सकलविद्याकुशलमतयः, माश्च धनकनकाद्यशेषसंपदश्च, धीमाः, तासां सीमा पारं, येषां ते धीमासीमाः, अर्थिनो याचकाः, तैर्मान्यः मानितुं योग्यः; अनेन सर्वविद्वद्राजसेवनीय इत्यर्थः; किंच, “गुरुसार्वभौमत्वं”, “श्रीमद्राजाधिराजत्वं” च सूचितं भवति—अत्र बंधस्थमध्यवर्णो ‘मा’ इति.

गुणिमणिप्रणिधिः — गुणिनां सकलसद्गुणवतां, येन मणयः श्रेष्ठाः, तेषां प्रणिधिः प्रोपसर्गपूर्वकनिधिः, (नितरां धीयतेऽस्मिन् इति डुधाञ् धारणपोषणयोरित्यस्माद्धातोः सकाशात्,) पोषणकर्तृ स्थानापन्नश्च — अनेन "सदोदितत्वं" सूचितम् — अत्र 'णि' कारः.

श्रीकरैकप्रकल्पः — श्रिया लक्ष्म्या, युक्तश्चासौ करश्च, स एको मुख्यः प्रकल्पः सुरतरुर्यः स तथोक्तः — अनेन "भक्तकार्यकल्पद्रुमत्वं" सूचितम् — अत्र 'क' कारः.

धीराधारामराढ्यः — धीराः गतैषणाः पंडिताः, तेषामाधारः ब्रह्मपदप्रापकः, अत एव अमराढ्यः, नम्रियंत इत्यमराः, बहुकाल संसिद्धयोगिनो देवाश्च, तेषामाढ्य स्वामी — अनेन "योगिमहाराजत्वं" सूचितम् अत्र 'रा' इति

अत्ययभयजयदः — अत्ययम् मृत्युः, तस्य भयं भीतिः, तस्याः जयं ददातीति दः — अनेन "त्रिभुवनानंदत्वं" प्रकटितम् — अत्र 'य' कारः.

ध्यानगानप्रनम्रः — ध्यायति परवस्त्विति ध्यानं, तदेव गानं अनाहतध्वनिः, तस्मिन् प्रनम्रः लीन इत्यर्थः — अथवा योगादिषु ध्यानात्मकं यद्गानं सामगानं, तस्मिन् लीन इतिवा — अनेन

"निरंजनत्वं" सूचितम्— अत्र 'न' कारः.

श्रीपालापाब्जपादः — श्रियं ब्रह्मविद्यां, पांतीति श्रीपाः, आलापाः यस्मिन् सर्वत्राद्वैतब्रह्मोपदेशकर्ता, सचासावब्जपादश्च— अत्र "अद्वैतत्वं" सूचितम्— अत्र 'पा' इति.

सदमदहृदयः —सत् अमदं मदरहितं हृद्येषां तेषां अयः शुभावहः – अनेन "अभेदत्वं" सूचितम् —अत्र 'द' कारः.

त्यागयोगप्रगल्भः — त्यजति दृग्दृश्यादिसर्वविषयानिति त्यागः, सचासौ योगश्च, तस्मिन् प्रगल्भः प्रतिभान्वितः ("बुद्धिस्तात्कालिकी ज्ञेया, मति रागामि गोचरा, प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मते", इति स्मरणात्.) अनेन "निर्गुणत्वं" सूचितम्— अत्र 'ग' कारः.

कालेऽकाले फलेच्छून्— काले शरीरनिर्याणसमये, अकाले शरीरधारणसमयेऽपि फलान्यमृतरूपेष्टार्थानि योगादिसाधनरूपाणि, तानीच्छंतीतीच्छून्, साधुजनानिति; किंच, काले सुवृष्टिसमये, अकाले अनावृष्ट्यादिदुर्भिक्षसमये, फलेच्छून् सस्यादिफलसमृध्यर्थिनः, सकलजनान्; यद्वा— काले प्रौढकाले, अकाले वार्धिक्येऽपि, फले च्छून् संतानादिसंपदर्थिनः— अत्र 'ले' कारः.

निगमगणगतिः — निगमानां वेदानां, गणास्तैर्गतिर्गमनं, यश दत्तावतारे चतुर्वेदात्मकैर्भषकैः सह संचरणं प्रसिद्धत्वात्. यद्वा— निगमगणानां गतिर्ज्ञानवाच्योऽय इति वा— अत्र 'ग' कारः.

पातिनीतिप्रतिष्ठः— पाति रक्षति, नीतिः सकलधर्मान्, स्थापय तीति प्रतिष्ठः. (अयं श्लोको यथाक्रमं व्याख्यातः) अत्र 'ति' कारः. अनेन पदत्रयेण "निरालंबत्वं", "परिपूर्णत्वं", "सकलमतस्थापकत्वं", "गुरुत्वं" च सूचितम्— "महाराजत्व" मंतेषां मध्येंऽतर्भावः— माणिकप्रभुपदं तु बंधमध्यगतवर्णसमीकरणेन स्फुटं भवत्येव. कवि प्रार्थना च— "माणिकरायनपादगळे गति", इति पंडितपामरजन बोधार्थं कर्णाटभाषया स्वाभिप्रायसूचनया समादरणीया.



श्रीमाणिक्यप्रभुमहाराजाय नमः.

# गद्यम्

श्रीमदमरवर नरमुनिसमुदय सततशिवसुखद परमनिभम निलय कंदर रुचिर कलिकलुषनिरसन निखिलपुष्करसरिद्वरनिचय विलसितविविधविटपिवितान विपिन विनोदकरमणिगण निबिड समुच्छ्रय शिखरललितमणिगिरिमध्यदेशे, मणिमल्लरिपु महालसा पतिवासविलासे, रङ्गदभंगोत्तुङ्गमङ्गळकरतरङ्गसंघ संशोभितविरजा वृषजातरङ्गिणीसङ्गम रङ्गस्थलविराजमानदिव्यगोपुरप्राकार रम्यहर्म्य नर्मभर्मसद्मान्वित सकलविभवविस्तृत निरंतरलक्ष्मीनिवासोल्लसित श्रीमन्माणिक्यनगरे, सर्वालंकरणमनोहरे, श्रीकरे, लसच्चन्द्रकांत माणिखचित समुन्नतायामाष्टकोणवेदिकोपरिन्यस्त रत्नस्तंभाग्रप्रस्तुत कनकसालभञ्जिकापुञ्ज प्रकटीकृत रामकृष्णाद्यवतारयशःपूर्णलीलायां, समंततः परिवेष्टित विचित्रदीपावळिभिरञ्चितनवमौक्तिकवितानमाला यां, अशेषजननिवेशनानुकूलायां, सभायां, सम्मुखोल्लसित शत कोटिरविकिरण भासुरसन्मंटपदेहल्युभयतोलंकृत मरकतमणितोरणा वळि मनुसृत्य प्रालंबिपरीमळभर सिळितमंदारमालतीकुसुममालिका वाळि निकटस्थल देदीप्यमान सुवर्णकुम्भरंभाक्रमुकेक्षुस्तम्भांतिक समु ज्वलद्विशददीपावळिभिरादीपितसकलदिगंतराळे, घुमघुमायमानागरु

कस्तूरीचंदनादि मिश्रितपरिमळधूपोत्थधूमजाले, अणिमाद्यष्टसिद्धि विशिष्ट देवायतनमध्यस्थले, कनकमयसिंहासनोपरि हंसतूलिकाबद्ध चित्रपीतांबरोपबर्हमृदुलकशिपुकल्पितशय्यायां, निखिलभोगवस्तु क्षय्यायां, विधिमुख विविधविबुधविसर विनुत विगतवृजिनविमल यशोवृत्त सत्पुरुषचित्तायत्तावाप्त समस्तार्थ,निस्तुलप्रशस्तगुणाभिव्यक्त दत्ताख्यः, त्रिदशाधिक्यः, सततार्थिगणश्लोक्यः, निजभक्तसंरक्षण लक्षण निरवधिक निरुपाधिकवात्सल्यसौलभ्यसौशील्यादिगुण जग द्विदितकथावाक्यः, शरणागताभिमतामृतपद प्रदानसमुदितसौख्यः, श्रीप्रभुमुख्यः, श्रीमन्माणिक्यः, निजसिंहासनोभयपार्श्वयोः समंततः परिवृतेषु ऋग्यजुस्सामाथर्वणवेदोपनिषदस्सु स्वरपूर्वकं गायमानेषु न्यायव्याकरणवेदांतादिशास्त्रवचनानि परस्परं विवदत्सु, काव्यनाटका लंकारपुराणेतिहासगद्यपद्यादि सकलानंदकर भगवद्गुणाभिवर्णनपर पर मामोदकर गीर्वाणभाषाचातुर्यलंकृत वाक्यान्यलंकुर्वत्सु, समपद मुकुळित करयुगविनमितशिरः प्रपठितभक्तकार्यकल्पद्रुमादिबिरुदावळि रक्षितेषु, निखिलविद्वद्विप्रपुंजेषु, सत्सु, तदंतिके, चन्द्रप्रभा मंडलविडंबितदिव्यसितातपत्रचामरध्वजपताकाद्यनेकविभुवैभवातिशय समृद्धनयनानंदकरकल्याणवस्त्वश्रितकरतलभ्राजत्सु, मुहुर्मुहुस्सव्या पसव्यपत्रीजनधारणालङ्करणादिसाधनरतेष्वन्यभक्तेषु,ताननुसृत्यानिज महिमप्रकाशकगंधर्वगानप्रवीणेषु, वीणादिसाधनयुतगायकवृन्देषु गायत्सु सत्सु, तत्पुरतोरंभाद्यप्सरोडंबराविभञ्जकरभोरुकुम्भिकुम्भसम कुचकुम्भबिंबाधरगुरुनितंबबंभरालककंबुकंठांबुजनयन पूर्णेंदु बिंबास्यजांबू

गद्यम्

नन्दाद्यंबरालंकृत वारानितांबिनीकदंब कृतेस्संभ्रमतांडव शिंजन्मंजुमंजीर किंकिणीमुखझणझणत्काररवैः, करतलकलितकनककङ्कणारवैः. मृदङ्ग ताळवीणावेणुघनघनायमाननिनादभरैर्बधिरीकृतेषु दिङ्मण्डलेषु, वंदि मागध नटविटविदूषकसंदोहेषु, करद्वंद्वांचित कनकमणिखचितदंडे, भक्तकार्यकल्पद्रुमादिबिरुदैः "जय! विजयीभव! दिग्विजयीभ!" वेति प्रतिक्षणमुच्चैर्नदत्सु, प्रभुसंवातः परिपूर्णमनोरथास्वशेषजनतासु, परि पक्वमधुरतर पनसाम्रकदळीखर्जूरनारिकेळफलेक्षुशर्कराप्रमुख मनोहर स्वादुपदार्थनिकरैर्मंदारमालतीमल्लिकामतल्लिका मालाजालैः, अनर्घ्य मणिकनकभूषणैः, संकुलपाङ्कचदुकूलाद्यंशुकैः, अवर्णितसुवर्णरजत संपूर्णसकलभद्रार्थप्रदमुद्रिकाभिःपरितस्समर्पयंतीषु, इतस्ततः परमभक्ति विरक्तिपूर्वक प्रदक्षिणनतितत्युत्सुकासु, निरंतर श्रीप्रभुकरुणाकटाक्ष पातान्, तत्पादाभिषिक्ततीर्थजातान्, तन्निवेदितमृष्टफलशर्करासंघाता निच्छयंतीषु सतीषु, कामधेनुरिवसकलकामनापरिपूर्णकरः, कांश्चि दवलोकनैः, कांश्चित्संभाषणैः, कांश्चित्करसंज्ञया, कांश्चिद्योगदंडेन मानयन्, कंदर्पकोटिसुन्दरलावण्यशरीरः, कुन्दकुड्मलचन्द्रचन्द्रिका सुन्दरमंदस्मितस्मेरः, निरतिशयविभवानंदनिकरः, दिव्यकनका नघतलपासादितवीरासनपरः, सर्वजनमनोदृग्गोचरः, समुद्धृतयोग दण्डकरः, कनकमणिगणरचित किरीटांगदकर्णकुण्डलहारांगुल्यादि भूषणविसरप्रसृमरः, सर्वमतस्थापनधुरंधरः, परात्परः श्रीमाणिक्य प्रभुवरो विरेजे.

श्रीगुर्वर्पणम्

ॐ



श्रीगुरु अवधूत!

श्रीसद्गुरु माणिक्यप्रभुमहाराजाय नमः!

# श्रीमाणिक्यविजयः

## प्रथमभागः

### प्रथमोऽध्यायः

श्रीमाणिक्यमहं सेवे मार्तांडप्रियभूषणम् १
मुक्तौघपूज्यपदकं मनोहरमुदाश्रयम्.
प्रभोश्चरितमद्भुतं सपदि वर्णयामिस्फुटम्
गुरोर्वरदयावशान्मम तु नास्ति काचिन्मतिः
सुभाषितसुधाझरी वितनुते रसज्ञाश्रितः २
स एव यदतस्तवे व्यवसितोस्मि तच्छिक्षितः.
क्वेयं? वाणीवराकी गुरुगुणगणना क्वार्णवः क्व? क्व पंगौ?
दीव्यंती तत्तितीर्षेत्यतिशयचकितं मामुपेत्यार्यभक्तिः
श्रीमाणिक्येशवृत्तं रचय तव सदा सुप्रसन्नास्मि वत्से ३
त्युक्त्वादात्सूक्तिपुष्पस्रजमिह भगवन्नर्पये तां गृहाण.
पूर्वैः सद्गुरुशिक्षितैः सुकविभिः संवर्णितेऽपि प्रभो
श्चारित्रे मम नाफलाकृतिरियं भक्त्यंचितालंकृतिः
राजन्त्यमरापगामलपयःपूरैर्कवंद्याधिते ४
कुल्या किं? विफलाभवेद्भुवि जनैः सस्यर्धयं निर्मिता.

धीमासीमार्थिमान्यो गुणिमणिप्रणिधिः श्रीकरैकप्रकल्पो
धीराधारामराढ्योऽव्ययभयजयदो ध्यानगानप्रसन्नः
श्रीपालापाब्जपादः सदमदहृदयस्त्यागयोगप्रगल्भः
कालेऽकालेफलेच्छून्निगमगणगतिः पाति नीतिप्रतिष्ठः. ५
योगिराज! महाराज! कल्पभूज! श्रितप्रज!
श्रीमन्निजपदांभोजसक्तं रंजय मामज! ६
बोधितजीवपरैक्यं देवमुनीन्द्रार्थिसंघसुश्लोक्यम्
ध्यातोपनिषद्वाक्यं श्रीमाणिक्यं श्रिताखिलाधिक्यम्. ७
दीनालिपारिजातं ध्यानाधूताग्रकल्मषव्रातम्
मानितविद्याभरणं मा नितरामाश्रयंत यं शरणम्. ८
मानसकमलासीनं मानसमाक्रांतजगदुदासीनम्
दैनंदिनशुभचरितं नानाविद्यासमंतमवधूतम्. ९
राजाधिराजपूज्यो राजाभिधयोगलब्धसाम्राज्यः
राजा यस्य नियोज्यः राजतुहृदयं प्रभुः स मे प्राज्यः. १०
जननीं समस्तजगतां जननीत्युपदेशदेशिकत्वगताम्
कीर्तितनूकृतमूर्तिं कीर्तितगां कामपि श्रयेमूर्तिम्. ११
आदौ ब्रह्माद्वितीयं प्रकृतिमुपगतं विष्णुमानंदमूर्तिम्
ब्रह्माणंचात्रिवर्यं विधिहरिशिवरूपात्मकं दत्तसंज्ञम्
श्रीपादश्रीधवाख्यं नृहरियतिवरं केशवं नारसिंहम्
वंदे चेतोहराख्यं गुरुगणमनिशं माणिकेन्द्रं मनोज्ञम्. १२
श्रीमन्माणिकदेशिकेन्द्रमवनीसंतानमद्वंदता
सिद्धं सर्वमतानुशासनपरं राजाधिराजाश्रयम्
नित्यं योगिवरं सदोदितमहं पूर्णं जगत्सौख्यदम्
नित्यानंदकरं निरंजनपदं वंदे गुरूणां गुरुम्. १३
श्रीमन्मनोहरवराभिधमाणिकेन्द्रम्
श्रीब्रह्मबोधवितथीकृतदृश्यगाथम्
दत्तावधूतमिव शैशवचिद्विलासैः
ध्यायाम्यहं श्रितजनावनपारिजातम्. १४

यः पूर्वमेव कलिकल्मषनाशनाय
सूताज्ञयैव समवोचदिदं पवित्रम्
श्रीमापिकेन्द्रचरितं किल दीनमुख्यान्
तं वत्सलं भजकवत्सलमाश्रयामः. १२

सूतशौनकादिप्रश्ननिरूपणम्.

एकदा नैमिशारण्ये मुनयः सत्रमासत
तदानीमागतः सूतो रोमहर्षणनंदनः. १
दृष्ट्वा तं व्यासस्सच्छिष्यं पुराणार्थविशारदम्
दत्वाब्रह्मासनं तस्मै प्राहुः प्रांजलयस्तदा. २

मुनयः—

सूतसूत! महाप्राज्ञ! स्वात्मज्ञानवतां वर!
शुश्रूषूणां वदास्माकं कथां देवस्य पावनीम्. ३
अष्टादशपुराणेषु माहात्म्यानि महेशितुः
मुनिनावर्णितानीह व्यासेनासिततेजसा. ४
रहस्यानि च सर्वाणि यान्यनल्पानिविस्तरैः
श्रुत्वा तदानीं तद्वार्तां समाजग्मुर्महर्षयः. ५
असितो देवलो व्यासः सुमंतुः पैलजैमिनी
रैभ्योऽणुः कण्वकपिलौ जाबालिः शरभो भृगुः. ६
वत्सलः पिङ्गलो दीनो मृकण्डुः सिद्धगावौ
येचान्ये मुनयः सिद्धाः सशिष्याः सहदारकाः. ७
आरेभिरे कथां श्रोतुमुपविष्टास्तदाज्ञया
शौनकादीन् पुरस्कृत्य कथाः प्रोवाच सोऽखिलाः. ८
अष्टादशपुराणेषु सेतिहासेषु भूरिशः
विराजंतेऽष्टादशसूपपुराणेषु यास्तथा. ९
वेदव्यासानुग्रहत विचित्रायाः श्रुता स्वयम्
श्रुत्वा हृष्टा बभूवुस्ते मुनयः शौनकादयः. १०
धन्यास्मः कृतकृत्यास्मः त्वत्तः श्रुत्वा कथां शुभाम्
इदानीं गंतुमुद्युक्तः त्वं तपोवनमादरात्. ११

वक्ताकोऽस्ति? महाप्राज्ञ! त्वां विना भुविदुर्लभः
प्राप्ते कलियुगे घोरे पापिजन्मैककारणे. १२
सत्कथाश्रवणे भक्तिः सर्वेषां न भवेत् ध्रुवम्
तदा दुर्वृत्तकुशला मानवाः किल नास्तिकाः. १३
अत्रोपायं वदास्माकं सर्वं जानाति यद्भवान्
येन ते संचरंतिस्म जना भीमभवार्णवम्. १४
इत्युक्तो मुनिभिः सूतो ज्ञात्वार्थं भावियोगतः
तेषां मध्ये समासीनं भक्तिवैराग्यबृंहितम्. १५
ब्रह्मनिष्ठं क्रियांच्छिष्यैर्न्दीनादिभिरलंकृतम्
वत्सलं तं समाहूय सूतोवाचमहामतिः. १६

सूतः—

युगे युगे प्रणष्टस्य धर्मस्योद्धरणाय च
अवतीर्य क्षितौदेवा ब्रह्मविष्णुमहेश्वराः. १७
क्रीडंति भजतामिष्टसिद्ध्यं दुष्टशांतयं
देवतिर्यङ्मनुष्यादिरूपैर्ज्ञानाभिवृद्धयं. १८
न विश्वसंति तिष्यस्थास्तथापि कलुषात्मकाः
मानुष्यमेव जानंति रूपं न तु सुरांशजम्. १९
तस्मात् त्वं स्पृहणीयोसि कलाघज्ञसुखाप्तये
महात्मनां कथाः पुण्या उत्थ्यापय महीतले. २०
त्वद्वाक्प्लवैस्तरिष्यंति जनाः संसारसागरम्
उक्त्वेत्थं स ययौ सूतः स्वाश्रमं मुनिपूजितः. २१
तदाज्ञां शिरसा धृत्वा सर्वे जग्मुस्तपोवनम्
स्मृत्वा स्मृत्वाश्च तद्वाक्यं नैमिशारण्यवासिनः. २२
कथामृतरसास्वादकुशला अभवन् सदा
परस्परं बोधयंतस्तस्थुः पौराणिकाः कथाः. २३
इत्थं कालो गतस्तेषां सूताज्ञावशवर्तिनाम्
क्रमात् प्राप्तस्तिष्यकालः सर्वसाधकबाधकः. २४
तदानीं कलनाग्रस्ता जना नास्तिकतां ययुः

दुष्टावेदपरिभ्रष्टा मातापित्रहितेऽरताः. २५
तानुद्धर्तुं वत्सलस्तु सिद्धः सज्जनपूजितः
पर्यटन् शिष्यनिवहैर्मल्लारिक्षेत्रमागमत्. २६
तत्रस्थमुनिशार्दूलैः पूजितोऽसैमुनीश्वरः
कुशलप्रश्नमकरोत् तेषां परमयोगिनाम्. २७
ऊचुस्ते मुनयः शीघ्रं वत्सलं भक्तवत्सलम्
किं ब्रूमः क्षेममस्माकं कलिनाग्रस्तचेतसाम्. २८
नष्टा आसन् वेदमार्गा देवयागादिकाः क्रियाः
नास्तिका बहवः सन्ति पाषण्डा देवनिन्दकाः. २९
तेनास्माकं सुखं नास्ति स्वल्पमप्यवनौ मुने!
यदृच्छया गतोसि त्वमस्मत्पुण्यविशेषतः. ३०
अतः क्षेमार्थमेतेषां ब्रूहि यद्धि हितं गुरो!
त्वत्तः परतरो नास्ति त्रिलोक्यां गुरुसत्तमः! ३१
इति दीनादिनिखिलमुनीनां वाक्यमादरात्
श्रुत्वा प्रोवाच वचनमभयं दर्शयन् करं. ३२

वत्सलः—

शृणुध्वं मुनयः सर्वे सद्योमुक्तिप्रदं नृणाम्
हितं वच्म्यधुना सूतवाक्यस्मृतिरभून्मम. ३३
भाविश्रीदत्तदेवस्य कलौ चारित्रमद्भुतम्
लीलामानुषदेहस्य पावनं पापनाशनम्. ३४
तेन सिद्धिर्भवेन् नृणामभीष्टा नित्यसौख्यदा
तच्छ्रुत्वा प्राहुरव्यग्रा दीनं मुनिकुलोत्तमम्. ३५
प्रष्टव्यार्थैककुशलः त्वं सदा गुरुचिंतकः
पृच्छ पृच्छ महात्मानं वत्सलं नः सुखास्पदं. ३६
तेषां मध्यात्समुत्थाय दीनस्तैरेवमर्थितः
वत्सलं प्राह विनयाद्भक्त्यानन्यदुरापया. ३७

इति श्रीब्रह्मण्डपुराणकथासारे, दत्तात्रेयजन्मपयः-
पारावारे, श्रीगुरुमहिमावर्णनरत्नावल्यां,

माणिक्यविजये, प्रथमभागे,
वत्सलदीनादिमुनीनां
समागमविवरणं
नम प्रथमोऽ
ध्यायः.




श्रीगुरु अवधूत!
श्रीसद्गुरु माणिक्यप्रभुमहाराजाय नमः!

# श्रीमाणिक्यविजयः

प्रथमभागः
द्वितीयोऽध्यायः
वत्सलदीनादिप्रश्नोत्तरकथनम्.

दीनः—
वत्सल त्वं नमद्भक्तवत्सलः परमार्थवित्
त्वया वचोऽमृतरसैर्यतः संजीवितावयम्. १
त्वत्तः श्रुतान्यपूर्वाणि चारित्राणि शुभानि च
लीलामानुषदेहस्य पालितामरसंततेः. २
शिवस्य केशवस्यापि शक्तेरग्नेस्तथा रवेः

एकैकस्य महाभाग! विचित्राणिपृथक् पृथक्. ३
युगे युगे प्रणष्टस्य धर्मस्योद्धरणाय यः
विशेषतः कलियुगेऽवतीर्य मुनिसत्तम! ४
क्षेत्रेषु पुण्यारामेषु संचरन् मुनिभिः सह
दीनान् भवभयाविष्टान् यथा पालयदाश्रितान्. ५
इदानीं श्रोतुमिच्छामो ब्रह्मविष्णुशिवात्मनः
दत्तात्रेयस्य चरितं दुरितार्णववाडवम्. ६
अन्यानि च रहस्यानि ब्रूहि तस्य यथा श्रुतम्
इत्थं वदन्तं स मुनिं दीनं प्राह दयायुतः. ७

वत्सलः—

शृणु दीन! प्रसन्नात्म! शृण्वन्तु मुनयस्तथा
भवाब्धितरणिं श्रीमद्दत्तात्रेयकथां शुभाम्. ८
सर्वपापप्रशमनीं सर्वेष्टार्थविवर्धनीम्
यां श्रुत्वा मुच्यते जन्तुरज्ञानाद्भवपाशतः. ९
सद्यः कैवल्यमाप्नोति विहीनोऽप्यात्मविद्यया
यथा श्रुतं सूतमुखात् तथा तां कथयामि वः. १०
सर्वोत्तमं दत्तगुरोर्माहात्म्यं केवलं महत्
ब्रह्मैवादौ निर्विकल्पमभूदेकं निरंजनम्. ११
यदालंबनतः सर्वे जीवन्ति स चराचराः
श्रुतयः संचरन्त्यस्य ब्रह्मणो ध्वनिरूपतः. १२
तद्रूपं व्याप्य सर्वत्र तेजोरासिरिव स्थितम्
सिसृक्षा समसूत् तस्य निर्विकल्पस्य मायिनः. १३
तत्सत्ताचोदिता माया जलरूपाभवत्पुरा
ब्रह्माभिन्नतयाचापो ब्रह्मेति मुनिभिः श्रिता. १४
तस्मिन् जले व्यक्तमभूत् तदा नारायणाभिधम्
पुरुषत्वेन तद्रूपं जग्मुस्ताः श्रुतयः प्रभुम्. १५
तस्य पद्मम् समभवन् नाभावष्टदलात्मकम्
लसत्किंजल्कसंछन्नम् कर्णिकासुमनोहरम्. १६

सहस्रार्कप्रतीकाशं विष्वग्व्याप्तं हिरण्मयम्
तस्मिन् स जनयामास ब्रह्माणं स रजोगुणम्. १७
चतुर्मुखंचाष्टभुजैरंचितं सपरिग्रहम्
महांतं पीतवर्णेन भासमानं स्वतेजसा. १८
ससंभ्रमं समुत्थाय तस्मात् ब्रह्मा हरेः सुतः
दिशो दश समालोक्य नेत्रैरष्टभिरात्मनः. १९
अचिंतयदमेयात्मा दृष्ट्वा जलमयं जगत्
कोऽहं? सर्वमिदं किन्नु? कस्माज्जातः? किमस्ति? हि. २०
विस्मयेन ययौ पद्ममध्ये तातं गवेषितुम्
तदाभवत् 'तप' इति ध्वनिः सर्वसुखावहः. २१
समारेभे तपःकर्तुमाकर्ण्य ध्वनिमात्मभूः
अभूवन् मानसाः पुत्राः स्वस्मादत्रिमुखानव. २२
उत्संगान्नारदो जज्ञे दक्षोऽगुष्ठात् स्वयंभुवः
इंद्राद्या मनवः सर्वे यक्षा नागाश्च किन्नराः. २३
सिद्धाः साध्या मुनिगणा येचान्ये दैत्यराक्षसाः
जाताः सहस्रशस्तेभ्यस्तेभ्यः सर्वमिदं ततम्. २४
सर्वेषामपि जंतूनां चतुर्णां बलवृद्धये
तेजबीजस्तथाचान्नम् कल्पयामासकंजजः. २५
वेदोक्तान् स्थापयामास धर्मांस्तेषां विमुक्तये
वेदबाह्यानधर्मांश्च तेषां दुर्गतये पुनः. २६
उत्तमाधोगती तेषां कल्पयामास भूरिशः
श्रुत्युक्तधर्मानाश्रित्य देवाश्चासन् त्रिविष्टपे. २७
श्रुतिबाह्यांश्च पाषण्डा नीचयोनौ चरंतिहि
इत्थं जगत्पुण्यपापैर्व्याप्तम् स्थिरचरात्मकम्. २८
कदाचिन्नारदोऽभ्यागात् ऋषिभिः पितुरंतिकम्
चतुर्मुखं सुखासीनं भारत्यासहितं विभुम्. २९
चतुर्भिर्वदनैर्वेदैः स्तुवंतं ब्रह्म केवलम्
नत्वा नम्रशिरा भक्त्या स्तोतुं समुपचक्रमे. ३०

नारदः—

नतोऽस्मि ते देवपदारविंदम् विद्यार्थिसिद्ध्यै भववंधमुक्त्यै
सुज्ञानहीनान् पशुभिः समानान् दृष्ट्वा जगत्याकुलितात्मवृत्तिः. ३१
रजस्तमोभ्यां विषयेषु रक्तान् ज्ञाने विरक्तान् सुकृतैर्विमुक्तान्
भेदाभियुक्तान् दुरितेषुसक्तान् ब्रह्मण्यभक्ता नववानशक्तान्. ३२
वेदैर्विहीनान् धृतमोहमानान् अघप्रधानान् हितपंचबाणान्
महानुमानान् ममतादिदीनान् याचेसमुद्धर्तुमहंनिहीनान्. ३३
दारेषुभृत्यान् कृतमातृहत्यन् असाधुकृत्यन् वयसासचित्यान्
निरंतरार्ता नवृतात्मवार्तान् त्रायस्वदृप्तान् भवदावतप्तान्. ३४
इत्थं वदंतं सुतमाबभाषे धाता समालोच्य मुनींद्रमुख्यम्
लोकोपकाराय कृतस्त्वयासौ प्रश्नः सुतश्रेष्ठ! तवस्तु! भद्रम्. ६५
नाहं स्वतंत्रः प्रभुरस्ति मत्तोऽधिकः सुराणां भगवाननंतः
यामः शरण्यं भजतां वरेण्यं योगीन्द्रगण्यं कृतसर्वपुण्यम्. ३६
इतीरयित्वा स मुनिं निवर्त्य वैकुंठलोकं सहसा समेत्य
आनंदपूर्णं मुनियोगिगम्यं मुक्तैः सदा सेव्यमशेषजीव्यम्. ३७
अंतःपुरं कल्पसुमाळितल्पे विभ्राजमानं फणिराट्सुतल्पे
चतुर्भुजं चक्रगदाधृदायुधं श्रीवत्सवत्सं गळशोभिकौस्तुभम्. ३८
स्फुरन्महारत्नकिरीटमंगदैर्गारुत्मताढ्यैर्लसितं मनोज्ञैः
हीरेन्दुनीहारवळक्षहारं पीतांबरं सांद्रपयोदसन्निभम्. ३९
श्रीभूमिसंसेवितपादपद्मम् मंदस्मितं पद्मविशालनेत्रम्
विनोदयंतं सकलामरस्त्रियस्तं देवदेवं प्रणनाम वेधाः. ४०

ब्रह्मविष्णुमहेश्वराणामालोचनम्

ब्रह्मा—

लोकाः समस्ता वृजिनाभितप्ताः संसारचक्रभ्रमणेनविष्णो!
तेषां जनानां भववंधमुक्तिः कथं भवेत्? ब्रूहि जगद्धिताय. ४१
कोऽन्योऽवनेऽस्ति? त्वदृतेसमर्थः त्वदाज्ञयाहं सृजनेप्रवृत्तः
विभातिभासातवचित्रभानुः प्रवाति वायुः प्रदहेत् कृशानुः. ४२
इत्थं वदंतं द्रुहिणं बभाषे शिवादृतेऽन्योऽत्र कथं समर्थः?

स्मरंतु सर्वे शिवमंतरंगे नतिर्विधायाद्य सुखस्यसिद्ध्यै. ४३
इति ब्रुवन् विश्वसृजं रमेशः स स्मार शंभुं गतमोहदंभः
तदा विरासीन्महदच्युताग्रे परात्परंज्योतिरभूतपूर्वम्. ४४
विलोक्य तद्विस्मितचेतसौ तावास्तां विधातृः स्वभुवौ विमूढौ
यदा निजाव्याजकृपाकटाक्षपात्रीकृतौ तेन तदा विबुध्य. ४५
नालं च तस्मः श्रुतयोपि यस्य रूपं विबोद्धुं तमुमू कथंचित्
प्रसन्नमीशं प्रतनोक्तिरत्नैरानर्चितुं शंभुमनंतमाद्यम्. ४६
भवाय शर्वाय नमोऽस्तु तुभ्यं पत्ये पशूनामभवात्ययाय
मौकौस्तुतौ स्तोकधियाववावां लोकेशराकान् जननीवदेकान्. ४७
जगन्नियंतर्जगतिप्रसूतं नानाविधं नास्तिकवृंदमासीत्
नाम्नावशिष्टास्तिकतायतस्त्वां याचामहे मोचय लोकदुःखम्. ४८
शिवस्य विष्णोर्गणनायकस्य सूर्यस्य शक्तेरपिभैरवस्य
भक्ताः पृथक्स्वस्वमतानुसृत्या श्रुतेरपार्थान् विदधत्युमेश! ४९
याथार्थ्य बोधाय भुवि श्रुतीनां संभूय शंभो! मनुजानबोधान्
अद्वैतधीदानविधाविनष्ट संसारबंधान् रचयाद्य सर्वान्. ५०
अभेदबोधाय वयं धरायामभेदरूपेण सहावतीर्य
पुत्रार्थिनोऽर्थैरभिलाषपूर्तिम् पुत्रात्मनाकुर्म इतीश ऊचे. ५१

इति श्रीब्रह्मण्डपुराणकथासारे, दत्तात्रेयजन्मपयः-
पारावारे, श्रीगुरुमहिमावर्णनरत्नावल्यां,
माणिक्यविजये, प्रथमभागे,
त्रिमूर्त्तीनामेकत्र समागमो
नामद्वितीयोऽ
ध्यायः.



श्रीगुरु अवधूत!

श्रीसद्गुरु माणिक्यप्रभुमहाराजाय नमः!

# श्रीमाणिक्यविजयः

## प्रथमभागः

### तृतीयोऽध्यायः

दीनः—

किमकुर्वन् ततो देवा? वैकुंठे हरिमंदिरे
आलोचनपरा ब्रह्मविष्णुशर्वा जनावने. १
अवतारः कथमभूत्? दत्तात्रेयस्य सद्गुरोः
यस्मिन् जातो? यथारूपस्तन्मे वद सुविस्तरात्. २

अत्र्यनसूययोस्तपश्चरणम्

वत्सलः—

वैकुंठलोकेऽजहरीशमुख्येष्वित्थं समालोचनतत्परेषु
अत्रिर्मनोज्ञे यमुनाप्रतीरे चकार घोरं तप आत्मजार्थम्. ३
तदानसूया सुखयत्पतिं स्वं शुश्रूषया सार्थकनामधेया
नाणेयधैर्या कृतपुण्यकार्या पतिप्रियापादकभव्यचर्या. ४

फलानिभक्षन् मुनिराद्यमासे मासि द्वितीयं स तु पर्णजालम्
तृतीयमासे सलिलं तुरीये वायुम् ततोऽसौ न च खाद किंचित्. ५
उद्वाहुरादित्यमवेक्ष्य दृष्ट्या निरुच्छ्वसन् जातु निराश्रयः सन्
ब्रह्माद्वितीयं तप एव यस्तत् तदेव शिश्राय गताभिमानः. ६
स्वयोगशक्त्या भुजगीवसुप्ता मुत्थाप्यतां कुंडलिनीम् परेशीम्
नीत्वासुषुम्ना सुषिरेण मूर्ध्नि सहस्रपत्रांबुजराजदीशम्. ७
तत्समरस्यं बहुशो विचिंत्य तदैक्यधृक् ध्वस्तसमस्तदोषः
ध्येय प्रमादाद्गतवाह्यवृत्तिः तस्थौयदा स्थाणुरिवाप्रकंप्य. ८
तदातपोऽग्निः प्रळयाग्निकल्पः प्रचक्रमे दग्धुमरं त्रिलोकीम्
तदर्दितो देवपतिः प्रतस्ते मुनिं पुरोधाय रमेशगेहम्. ९
मूर्तित्रये तत्र विलोकितेति कर्तव्यतामूढसुराधिपेण
यदा तदा देवमुनिःप्रणम्य तां दुर्दशां वज्रिण आबभाषे. १०
उग्रं तपः पुत्रकृते वितन्वत् यत्रौ दिवं व्यव्य तपोग्निरंतान्
ददाह यत् तद्भयविह्वलो यं जानाति नोकिंचिदपि स्वरीश्वरः. ११
पतिव्रतात्वावमतेन्दिरोमावाणी यतः पाति तपोऽनसूया
ततः सुपर्वाळिकृतांतरायाः कृतांतशुद्धांतमशिश्रयंत. १२
इतः परं त्रातुमिमं सुरेशं त्रासात् तपोऽग्निप्रभवाद्विहस्तम्
दक्षाभवंतस्त्रय एव नान्ये रक्षात्ययोद्भूति निधानभूताः. १३
एतावदुक्त्वा विरते सुरर्षौ वागीश्वरीमागिरिराजपुत्र्यः
सुरर्षिमूचुः सुतसूनृतागीरियं कदाचिन्नयतोपहास्या. १४
तद्वाक्यमाकर्ण्य मुनिर्न्यगादीत् पतिव्रता सैव पवित्रवृत्ता
नान्या सती तत्सदृशी त्रिलोक्यां देव्यस्तयाभूत् सफलं तपस्तत्. १५
नालं विरिंचोऽपि गुणांस्तदीयान् संख्यातुमद्धे रितरैर्दुरापान्
प्रयोजनं किं बहुभाषितेन? पतिव्रता सैव न काचिदन्या. १६
मूर्खस्त्वया यन्मनुजांगना सा दौत्यक्रियादक्षतरेणशास्ता
अस्माननादृत्य मृषाभिभाषिन् वृथैव जातेऽजतनौ मुनीश! १७
श्रुत्वा तदीयं वचनं जगाद हसन् स देवीस्तमसाभिभूताः
नासत्यमुक्तम् न च वच्मिवक्ष्ये तथापि निंदंति मुधैव यूयम्. १८

अयश्चणकपायसं विरचयंतु यूयं क्षणात्
सतीत्वमहिमास्तिचेन्नयदि सा करोतिध्रुवम्
इति ब्रुवति नारदे प्रतिविहस्यता ऊचिरं
कृतं तवपरीक्षया गगनपुष्पकल्पोह्या. १९
भानूरात्रावुदयति गिरावंबुजं जायतेऽग्निः
शैत्यं याति प्रचलति गिरिश्चेदयःपायसं स्यात्
मिथ्यावादैरलमलमतो गच्छ गच्छानसूया
कुर्यांच्चेत् तत्पदसरसिजे पूजयामः शिरोभिः. २०
आकर्ण्य तद्वाचमतन्वसूयां तदानसूयां सययावमेयाम्
महर्षिजायां गतमोहमायां सुरेन्द्रगेयां व्रतशुष्ककायाम्. २१
वनं चरंतीम् तपसा ज्वलंतीम् विलोक्य दीनान् परितोषयंतीम्
सदानुयांतीम् पतिमर्चयंतीम् मंते वसंतीम् स्वपतेर्लसंतीम्. २२
ननाम तस्याः पदकंजयुग्मम् दूरान् मुनिर्मोदमवाप्य शीघ्रम्
साफल्यमापाक्षियुगं ममास्या विलोकनात् सत्यमिति न्यगादीत्. २३
सा नारदं प्रत्यभिगम्य पादौ प्रक्षाळ्य तद्वारि निपीय भक्त्या
कृष्णाजिने तं विनिवेश्य पूजां निर्वर्त्य बद्धांजलिरंनमूचे. २४

अनसूया—

मदीयपुण्यैः शतजन्मलब्धैः भवादृशालोकनहेतुभूतैः
धन्यास्म्यतस्ते मनसीप्सितं यद्दास्येऽतिथेरर्चनमेव मुख्यम्. २५

नारदः—

स्वेष्टार्थसिद्धिस्तवदर्शनेन बभूव वक्ष्यं हृदयं तथापि
अयोमयैः पायसमंब! कृत्वा दिशस्व मह्यम् चणकैरमीभिः. २६
श्रुत्वा सदंभं तदुदीरितं सा ध्यात्वा स्वभर्तुः पदयुग्ममाशु
मुनीश्वराल्लोहचणान् गृहीत्वा पाकार्थमैद्धाम सगार्हपत्यम्. २७

4

पतिव्रताहं पतिमत्रिमेव कायेन वाचा मनसा स्मरामि
अत्र्यंघ्रिभक्तिर्मम जाग्रदादौ यदि प्रसीदेश्वरगार्हपत्य. २८
अत्र्यंघ्रिवाःक्लिन्नमयोमयं तं भक्त्या एचत्साध्वसतश्च साध्व्याः
न गार्हपत्यश्चणकव्रजं यत् सत्वात्क्रिया सिध्यति साधकेन. २९
मुदा गृहीत्वा परमान्नमग्रे रथर्व येऽदात् पतिदेवता सा
स्वीकृत्य तत्तामभिवंद्य मूर्ध्ना प्रोवाच हर्षेण सतीम् सुरर्षिः. ३०

नारदः—

मात! स्त्रिलोक्यां प्रथितं यशस्ते स्वच्छं हि गंतुम् मम देह्यनुज्ञाम्
नो देति यावन्महता मपेक्षा तावद्विलंबोऽर्थे इति प्रशंसन् ३१
श्रीगीशिवाभ्यः प्रददौ सुरर्षिः सतीकृतं पायसमादरेण
ताश्चिंतयामासु रयोमयंतत् दृष्ट्वा पतीनूचुरतीव तप्ताः. ३२
चक्रेऽनसूयामहतीमसूया मस्मासु तस्या व्रतभंगमाशु
कुरुध्वमेतेन भवेत् प्रमोदोऽस्माकं न चेज्जागरिता प्रमादः. ३३
भृशं तदुक्त्याथ ययुस्त्रयस्ते यत्रानसूयात्रिमुनी चकास्तः
परीक्ष्य भक्तानथ दातुमिष्टमाधातुकामा इव दारकामान्. ३४
धृत्वा त्रयस्ते द्ढवर्णिवेषं दृष्ट्वा सतीरत्नमुपह्वरे तां
पूजां कुरु त्वं विगतांबरा नः तुष्टिर्भवेत् तद्धितवेत्यवोचन्. ३५
आनीय शीघ्रं पतिपाद्यवारि शिरस्सु तेषां प्रमदान्यषिंचत्
क्षणादभूवन् शिशवस्त्रयस्ते भूयः फलाप्तौ खलु भावनौजः. ३६
सा लालयत् तान् विगतांबरात्रीन् डोलां समारोप्य शिशूनलज्जा
तेषां चरित्राण्यनुवर्णयंति चक्रेऽनसूयाजहरीशसेवाम्. ३७
श्रीगीशिवास्तान स्वपतीन् विदित्वा मुनेः सकाशाद्ययुरत्रिभार्याम्
भक्त्या ययाचुः स्वपतीन् सतीम् तां दयाद्दशास्मा नवतेंऽघ्रिसक्ताः.
ता सां समाकर्ण्य वचः सती सा स्नात्वा तटिन्यां धृतशुभ्रवस्त्रा
संप्रार्थयामास हरीशधातृन् गतान् शिशुत्वं निजरूपसिद्ध्यै ३९
रूपम् दर्शय माधवाच्युत निजं श्रीकंठ गौरीपते
ब्रह्मन् वाक्प्रिय संप्रति स्पृहयते यच्छ्रीः शिवा भारती

इत्थं प्रार्थ्य सती शिशून् पतिपदाब्जस्पर्शपूतैर्जलैः
संस्मृत्य प्रियमभ्यषिंच दधते प्रत्यक्ष रूपं दधुः. ४०
ददर्श साध्वी रविकोटिदीप्तीन् विधातृदामोदरशंकराख्यान्
सर्वेष्टदातॄन् सकलारिजेतॄन् जगन्नियंतॄन् जनिपाद्यहंतॄन्. ४१
अत्रिस्तदानीम् विरतः समाधेर्विलोक्य धात्रच्युतचंद्रचूडान्
अवोचदानंदभवाश्रुमुञ्चन् ससंशयस्तत्रितयागतौ तान्. ४२
वस्त्वेकमस्माभिरनुस्मृतं यत् कुतस्त्रिमूर्त्यागतिरत्र जाता
भवत्सु कं वा शरणं व्रजामि त्रिभ्यो भवद्भ्यो स्त्वपकृत्प्रणामः. ४३
इत्थं वदंतं मुनि मूचिरे ते मूर्तित्रये नोऽस्तिभिदामिथोन
मुनेः परीक्ष्याथ तव द्वितीयां पुत्रान प्रदातुं वयमागतास्मः. ४४
उक्त्वेत्थमत्रि पुनरूचिरे ते देयोऽद्यकोवा भवदीप्सितार्थः
इति त्रिमूर्त्योक्तिमयं निशम्य तदुत्तरं पुत्र इति न्यगादीत्. ४५
अथावकर्ण्यात्रिगिरं सकृत्ते प्रोच्चार्य दत्तः स इति त्रयोऽपि
अंतर्धिमायन् प्रतिगृह्य वह्नी स्त्वयोर्नतीरद्भुतवार्धिमग्नाः. ४६

दत्तात्रेयावतारकथनम्

हृष्टं मुनिद्वंद्वमभीष्ट सिद्ध्या कळिंदजारम्यतटे विजह्रे
मूर्तित्रयांशैः समधत्त गर्भं विराजमानंपतिदेवता सा. ४७
उच्चास्थिते रर्ककवीन्दुजीव भौमैः सहोच्चच्छदभूततिथ्यम्
मंदारपुष्पैः सुरहस्तमुक्तैरलंकृतं वह्न हरीशजन्म. ४८
अत्रिस्तदा सप्तदृशं त्रिवक्त्रं सलीलमासेचनकांगजालम्
षड्भिर्भुजैर्दंडवरावभीतिचिन्मुद्राक्षमाला करकां दधानम्. ४९
कामादिजेत्रं करुणाकळत्रं कठोरपापव्रततीलवित्रम्
त्रिलोक मित्रं ललितोक्तिपात्रमलोकतानंदभरात्स्वपुत्रम्. ५०
मातानसूयादिवत् त्रिलोकी मातारमालोक्य निजांतरंगे
अजृंभताद्यः पुरुषः पिचंडादजन्यरूपोऽयमहोममेति. ५१
चित्रं चिकीर्षुः स तु पश्यतोस्व पित्रोर्ददौ प्राकृतपुत्रमोहम्

तौ तं रुदंतं सुतमाद्रियंता मथ्युप्रमुज्य प्रणयातिरेकात्. ५२
शृण्वन्ति ये दत्तमुनीन्द्रजन्म कथामिमां भक्तिपुरस्सरेण
भुक्त्वेहभोगानखिला नयंते दत्तप्रसादादमृतंच तेऽन्ते. ५३

इति श्रीब्रह्मण्डपुराणकथासारे, दत्तात्रेयजन्मपयःपारावारे, श्रीगुरुमहिमावर्णनरत्नावल्यां, माणिक्यविजये, प्रथमभागे, दत्तात्रेयजन्मकथाविवरणं नामतृतीयोऽध्यायः.

ॐ



श्रीगुरु अवधूत!

श्रीसद्गुरु माणिक्यप्रभुमहाराजाय नमः!

# श्रीमाणिक्यविजयः

प्रथमभागः

चतुर्थोऽध्यायः

दीनादयः—

अबाधत पुरायास्मान् वत्सलापन्नवत्सल!
तृष्णा न बाधते साद्य पीतदत्तकथामृतान्. १

ततः किमकरोद्दत्तः? पृथिव्यामवतीर्य सः
कस्मिन् कस्मिन् युगेहस्तु कतिष्वासीत् सुखात्मना? २
पुण्यस्थले कुत्र कुत्र तस्थौ भक्तानवन् भयात्?
दत्तस्य कति रूपाणि? नामधेयानि वा कति? ३
विचित्राणि चरित्राणि तस्य सर्वाणि वत्सल!
रहस्यानि च पुण्यानि तानि नो वद विस्तरात्. ४

वत्सलः—

श्रुणुध्वं मुनयः सर्वे दत्तमाहात्म्यमुत्तमम्
सूतप्रसादाद्युष्माक वच्मि सर्वं यथामति. ५
त्रेतायामनसूयायामाविर्भूतः सुरार्थितः
चतुर्दश्यां मार्गशीर्षे दत्तः सर्वसुखोदयः. ६
जातं ज्ञात्वा नारदाद्याः सब्रन्यत्रेः सुरेश्वरम्
गत्वाद्भुतशिशुम् दृष्ट्वा तेऽत्रिं स्तोतुम् प्रचक्रमुः. ७

मुनयः—

यतो जातः स्वयं साक्षाद्धरीस्तवगृहे मुने!
धन्योस्यतस्त्वयालोकास्तारिता भवसागरात्. ८
अनसूया लोकमाता यस्यां पादे स्थितं जगत्
युवयोः स्मरणादेव जंतुः पापैः प्रमुच्यते. ९
पतिव्रतांगना यत्र गंगाद्यास्तत्र संति हि.
वयं धन्यतमा एव युवयोर्दर्शनादलम्. १०
इत्थमुक्त्वाथ मुनयः परमानंदनिर्भराः
समीपे संस्थितं देवं दत्तात्रेयमनामयम्. ११
पद्मासने समासीनं चिन्मुद्रालंकृतं शुभम्
कोटिसूर्यप्रतिकाशं कोटिचंद्रसुशीतलम्. १२

आनन्दपूर्णमज्ञानध्वांतसंघरविं गुरुम्
शरणागतसन्त्राणपरायणमजं विभुम्. १३
दृष्ट्वा ते मुनयः सर्वे साष्टांगं प्रणिपत्य च
कृतांजलिपुटादेवं स्तोतुम् समुपचक्रमुः. १४

नारदादयः—

भजामः सदा दत्तमत्रेः सुपुत्रम् भवारण्यदावं लसच्चित्प्रभावम्
प्रजानां शरण्यं श्रुतीनामगण्यम् मुनीनां वरेण्यं सुराणां च मान्यम्.
सदाधारपद्मे चतुष्पत्रसद्मन्यखंडैकरूपो वसान्तार्णदीपः
स्फुरद्रक्तवर्णो गणेशस्वरूपः पराशक्तियुक्तः सदा पातु दत्तः. १६
लसत्षट्छदस्याद्यधिष्ठानचक्रे विधातृस्वरूपः सदाध्यात्मदीपः
बलांतार्णपीठे लसत्पीतवर्णः स्वशक्त्यात्रसंस्थः सदा पातु दत्तः. १७
मणीपूरचक्रे घनानीलधामा हृषीकेशनामास्यहो! पूर्णकाम
दशारे विहारी कृपापूरसारो डफांतार्णवृत्तः सदा पातु दत्तः. १८
हृदि द्वादशारे कठांतर्णवारे भवान् शंकराख्यः प्रभो नित्यसौख्यः
सिते चंद्रमौळिर्नमद्भक्तपाळिश्चिदाकाशसंस्थः सदा पातु दत्तः. १९
गळे षोडशारे स्वरार्णैकहारे विशुद्धाख्यशक्त्यायुतः शुद्धमुक्तः
स्फुरद्वैखरीनादपूर्णः परात्मा चिदानंदमत्तः सदा पातु दत्तः. २०
लसद्धक्षवर्णद्वयीराजमाने हिरण्योपमाभः सजीवाभिधानः
त्रिपुट्यन्त आज्ञाख्यचक्रे विभान्यः सदा तुष्टचित्तः प्रभुः पातु दत्तः. २१
सहस्रारमध्ये गुरुस्थानहृद्ये गुणातीतमव्यक्तमाद्यंतशून्यम्
महाकाशसंज्ञं मुनीनां मनोज्ञं भजामोऽद्वितीयं मुदा तं तुरीयम्. २२
कलौ संति दुष्टाः सतृट्क्षुद्विनष्टाः सदामोहनिष्ठा दुराशाभिपुष्टाः
कदध्वप्रविष्टा महारुग्विनष्टा भवव्याळदष्टा नृशंसालघिष्ठाः. २३
तानुद्धर जगद्योने! शुद्धाद्वैतोपदेशतः

युगे युगे प्रणष्टस्य धर्मस्योद्धरणं कुरु. २४
धृत्वा नृदेवरूपाणि महाद्भुतकराणि च
असत्संरक्षणं देव कृतवान् किल यत्पुरा. २५
इदानीमखिलान् प्राप्तदुःखादव जगद्गुरो !
नोचेत् सुखं किंचिदपि नास्त्यस्माकं शुभार्थिनाम्. २६
दत्तात्रेयस्तदाकर्ण्य वाक्यं मुनिवरेडितम्
स्वावतारस्थितिंज्ञात्वा लोकानुद्धर्तुमादरात्. २७
नारदादीन् सुरर्षीन्द्रानुवाच मधुरं वचः
वेदोपनिषदर्थांश्च श्रुणुध्वं वच्मि नारद्म. २८

नारदसांकृत्यादीन्प्रति दत्तात्रेयकृतब्रह्मोपदेशः

दत्तात्रेयः—

साधनैः सकलैर्युक्तस्तरत्येनं भवार्णवम्
दृश्येऽस्मिन् तुच्छतां कृत्वा दृशि लत्यत्वमात्मवित्. २९
असंगः संचरेन् मौनी सर्वसंग समुज्झितः
कृत्याकृत्यद्वयं हित्वा ब्रह्मीभावमनुव्रजेत्. ३०
एषागतिः पराकाष्ठा पुनरावर्तिवर्जिता
एवं पश्यति भूतानि ब्रह्मांडानि महंति च. ३१
श्रुत्वा वाक्यं महात्मानं दत्तात्रेयं जगन्मयम्
तन्मध्ये सांकृतिः प्राह सर्वेषां हितमावहन्. ३२

सांकृतिः—

कश्चावधूतस्तस्योक्तास्थितिः का ? लक्षणं च किम् ?
एतन्नोब्रूहि सकलं स्वयं ब्रह्मासि यद्गुरो. ३३
इत्युक्तो मुनिना हृष्टः सर्वेषां मुक्तिसिद्धये
दत्तात्रेयः पुनः प्राह रहस्यं स्वस्यवैभवम्. ३४

दत्तात्रेयः—
अक्षरत्वाद्वरेण्यत्वाद्धूतसंसारबंधनात्
तत्त्वमस्यर्थसिद्धत्वादवधूत इतीर्यते. ३५
यो विलंघ्याश्रमान् वर्णानात्मन्येव स्थितः सदा
अतिवर्णाश्रमो योगी सोऽवधूत इतीर्यते. ३६
तस्य प्रियं शिरःकृत्वा मोदं दक्षिणपक्षकम्
प्रमोदमुत्तरं पक्षं कुर्यादानन्दमात्मसात्. ३७
गोवालसदृशं शीर्षे नापि मध्ये न चाप्यधः
ब्रह्मपुच्छं प्रतिष्ठेति ब्रह्मकारेण योजयेत्. ३८
पंचांगं ब्रह्मयेजानं स्वयं ते तं परांगतिम्
कर्मणा प्रजया नेहामृतत्वं प्राप्नुवंति यत्. ३९
अवधूय क्रियादीनि सुखं यांत्यपुनर्भवम्
स्वेच्छा संचरणं यस्य सांबरो वा दिगंबरः. ४०
धर्माधर्मौ पुण्यपापे यस्य नस्तः स योगिराट्
अंतर्यागेण संशुद्धः सर्वं तरति साधकः. ४१
यथा रविः सर्वरसान् प्रभुंक्ते हुताशनश्चापि हि सर्वभक्षकः
तथैव योगी विषयान् प्रभुंक्ते न लिप्यते दुष्कृतपुण्यलेशैः. ४२
अपूर्यमाणं अचलप्रतिष्ठम् समुद्रमापः प्रविशंति यद्वत्
कामाय तद्वत् प्रविशंति सर्वे स शांतिमाप्नोति न कामकामि. ४३
न विरोधो न चोत्पत्तिर्नबंधो न च साधनम्
न मुमुक्षुर्नवै मुक्तिरित्येषा परमार्थता. ४४
ऐहिकामुष्मिकव्रातसिद्ध्यै मुक्तैश्च सिद्धये
बहुकृत्यं पुरासीन्मे तत्सर्वमधुना कृतम्. ४५
तदेव कृतकृत्यत्वं प्रतियोगिपुरस्सरम्

दुःखिनोऽज्ञाः संसरंतु कामंपुत्राद्यपेक्षया. ४६
परमानन्दपूर्णोऽहं संसरामि किमिच्छया?
अनुतिष्ठंतु कर्माणि परलोकधियापरं. ४७
सर्वलोकात्मनः कस्मादनुतिष्ठामि? किं कथम्?
व्याचक्षतां ते शास्त्राणि वेदानध्यापयंतु वा. ४८
येऽत्राधिकारिणो मे तु नाधिकारोऽक्रियत्वतः
निद्राभिक्षे स्नानशौचे नेच्छामि न करोमि च. ४९
जानन्तु दोषान् द्रष्टारः किम् मे स्यादन्यकल्पनात्?
गुंजापुंजादिदह्येत नान्यारोपितवह्निना. ५०
नान्यारोपितसंसारा धर्मानेवमहं भजे
शृण्वंत्वज्ञाततत्त्वान्ते जानन् तस्माच्छृणोम्यहम्. ५१
मन्यंतां संशयापन्ना न मन्येऽहं न संशयः
विपर्यस्तो निधिध्यानं किं ध्यानमविपर्ययं? ५२
देहात्मत्वविपर्यासं न कदाचिद्भजाम्यहम्
अहं मनुष्य इत्यादि व्यवहारो वा विनाप्यमुम्. ५३
विपर्यासश्चिराभ्यस्त वासनायोपकल्पते
आरब्धकर्मणि क्षीणे व्यवहारो निवर्तते. ५४
कर्मक्षये त्वसौ नैव शाम्ये ध्यानसहस्रतः
विरळत्वं व्यपहृतेरिष्टं चेध्यानमस्तु ते. ५५
बाह्यकर्मव्यवहृतिं पश्यन् ध्यायाम्यहं कुतः?
विक्षेपो नास्ति यस्मान् मे न समाधिस्ततोमम. ५६
विक्षेपो वा समाधिर्वा मनसः स्याद्विकारिणः
नित्यानुभवरूपस्य को मे त्रानुभवः पृथक्? ५७
कृतं कृत्यं प्रापणीयं प्राप्तमित्येव नित्यशः

6

व्यवहारो लौकिको वा शास्त्रीयो वान्यथापि वा. ५८
ममाकर्तुरलेपस्य यथारब्धं प्रवर्तताम्
अथवा कृतकृत्योऽपि लोकानुग्रहकाम्यया. ५९
शास्त्रीयेणैव मार्गेण वर्तेऽहं मम का क्षतिः?
देवार्चनस्नानशौचभिक्षादौ वर्ततां वपुः. ६०
तारं जपतु वाक्तद्वत् पठत्वाम्नायमस्तकम्
विष्णुम् ध्यायतु धीर्यद्वा ब्रह्मानन्दे विलीयताम्. ६१
साक्ष्यहं किंचिदप्यत्र न कुर्वे नापि कारये
कृतकृत्यतया तृप्तः प्राप्तप्राप्यतया पुनः. ६२
तृप्यन्नेवं स्वमनसा मन्यतेऽसौ निरन्तरम्
धन्योहं धन्योहं नित्यम् स्वात्मानमंजसा वेद्मि
धन्योऽहं धन्योऽहं ब्रह्मानन्दो विभाति मे स्पष्टम्. ६३
धन्योहं धन्योहं दुःखं सांसारिकं नवीक्षेऽद्य
धन्योऽहं धन्योऽहं प्राप्तव्यं सर्व मत्र संपन्नम्. ६४
धन्योऽहं धन्योहं कर्तृत्वं मे न विद्यते किंचित्
धन्योऽहं धन्योऽहं तृप्तेर्मे कोपमाभवेल्लोके. ६५
अहो! पुण्यमहो! पुण्यं फलितं फलितं दृढम्
अस्य पुण्यस्य संपत्तिरहो! वयमहो! वयम्. ६६
अहो! ज्ञानमहो! ज्ञानमहो! सुखमहो! सुखम्
अहो! शास्त्रमहो! शास्त्रमहो! गुरुरहो! गुरुः. ६७
एवं विदित्वासपुमान् कृतकृत्यो भविष्यति
ब्रह्महापि सुरापो वा स्वर्णहृद्गुरुतल्पगः. ६८
गोहत्यया युतो वापि भ्रूणहा स्त्रीविहिंसकः
मयोक्तमवधूतानां तत्वं सद्योविमुक्तिदम्. ६९
यः पठेच्छृणुयाद्वापि गुरुभक्त्याप्रयत्नतः

सर्वपापैः प्रमुक्तः सन् याति मत्पदमुत्तमम्. ७७

वत्सलः—

इत्थं ते गुरुणादिष्टाः सांकृत्याद्या महर्षयः
नीवृत्तसर्वसंदेहा जीवन्मुक्ता विरेजिरे. ७१
य एवमिममध्यायं प्रत्यहं भक्तिसंयुतः
पठेत् कैवल्यमाप्नोति नात्र कार्या विचारणा. ७२

इति श्रीब्रह्मण्डपुराणकथासारे, दत्तात्रेयजन्मपयः-
पारावारे, श्रीगुरुमहिमावर्णनरत्नावल्यां,
माणिक्यविजये, प्रथमभागे, सांकृति
नारदादीन्प्रतिदत्तात्रेयकृतोप
देशोनामचतुर्थोऽ
ध्यायः.

ॐ



श्रीगुरु अवधूत!
श्रीसद्गुरु माणिक्यप्रभुमहाराजाय नमः!

# श्रीमाणिक्यविजयः

प्रथमभागः
पंचमोऽध्यायः

गतेषु मुनिवर्येषु स्वंधामाथ मुने! मुदा
अत्रि प्रीतमनाः पुत्रं दत्तांशं प्राह विस्मितः १

अत्रिः—

त्वां मानुषं मन्यमानः प्रविष्टो मोहसागरे
न ज्ञातं ज्ञानममलं मया त्वत्तः शुभप्रद ! २
नाशयाज्ञानतिमिरं त्वं विज्ञानार्यमांशुतः
मत्सुतो मद्गृहं ह्येतदित्यहंकारकल्पितम्. ३
अतस्त्वत्पादभक्तिर्मे सदास्तु तवदर्शनम्
त्वय्येव तिष्ठतु मनस्त्वदन्यं जातु नार्थये. ४
इति स्तुवंतं पितरं भक्तत्राणपरायणः
सस्मितः प्राह विनयाद्दत्तः सर्वसुखाय च. ५

अत्र्यनसूयाभ्यां दत्तात्रेयवरप्रदानम्

दत्तः—

वरं वृणीष्व दास्येऽहं यदभीष्टं न संशयः
दर्शनं न वृथा भूयान्मम तापससत्तम ! ६
इत्युक्तस्तनयं प्राह दत्तंज्ञानैकविग्रहम्
विदित्वा स्वसतिंचित्तं पुत्रमोहेन तापसः. ७

अत्रिः—

इदानीमवधूतोसि सर्वसंगविवर्जितः
ते बाललीला सुभगा दुर्लभाभूत् सुखास्पदा. ८
अतस्तवालिंगनान्नपानादिभिरहर्निशम्
पुत्रस्नेहेन मोहेन सुखं मे प्राप्नुयान्मनः. ९
इति बुद्धिः समुत्पन्ना किं करोमि? जगद्गुरो !
न प्राप्तः स इहानन्दो मया भाग्येन जातु चित्. १०
न कांक्षामि जयं देव! न हि मुक्तिं त्रिविष्टपम्
पुत्र मे वाभिकांक्षामि मुने जन्मनि जन्मनि. ११

त्वज्जननः सर्वसिद्धिरभूदस्मासु सौख्यदा
इत्युक्तः पुनरूचे तं भगवान् भक्तवत्सलः. १२
त्वदीयतपसा तुष्टः पूर्वमेवाहमब्रवम्
२ त्रिवारं दत्त इति यत् तदसत्यं भवेत् कथम्? १३
अतो लोकहितायाहं त्वदिष्टार्थं प्रपूर्तये
३ पुत्रोभवामि तं तात! त्रिषु जन्मसु सौख्यदः. १४
कलावपि मुने! त्वं तु भवितासि द्विजोत्तमः
४ अनसूयापि मद्वाक्यात् तव भार्या भविष्यति. १५
युवयोः पुत्रतामेत्य वितरिष्याम्यहं सुखम्
५ नानृतं मे वच इति सदा त्वं हृदि धारय. १६
नेदं रूपं सुरैर्दृष्टं ब्रह्मादिभिरकल्मषैः
भक्त्या संदर्शितं साधो! धन्योस्यस्मत्पितृत्वतः. १७
त्वमप्येव! मयादिष्टं हृदि ध्यात्वा दिवानिशम्
६ इतः परं मत्स्मरणाद्भवाब्धिं तर सत्वरम्. १८
इत्युक्त्वा देवदेवस्तु लोकानुद्धर्तुमादरात्
७ ययौ तीर्थाटनपरः सर्वदेवनमस्कृतः १९
त्रेतायुगे प्रणष्टस्य धर्मसंस्थापनाय च
तत्र तत्र चरन् योगी दत्तात्रेयो महामतिः. २०
८ योगमार्गं तथाज्ञानमद्वैतं ब्रह्मकेवलम्
चतुष्षष्टिकलाः सर्वा विभूति रणिमादिमाः २१
९ यं यं कामयते मर्त्य स्तं तं दत्वा महामुनिः
लोकाचार्यः समुद्दध्रे चराचरमिदं जगत्. २२
१० दत्तः स्नानकृते याति प्रत्यहं काशिकापुरीम्
भीमातीरे पांडुरंगक्षेत्रे सर्वसमृद्धिदे. २३
११

भस्मचन्दनपुंड्रादि रुद्राक्षतुलसीस्रजः
धरन् दिगंबरः पृथ्व्यां संचरत्यनिशं मुने. २५
मौनि कोल्लापुरं याति प्रथमे प्रहरे मुदा
तत्रस्थयोगीनां नित्यं दत्वा स्वं दर्शनं विभुः. २६
मध्याह्ने माहुरी क्षेत्रे भिक्षामटति सद्गुरुः
भोजनं कुरुते नित्यं पांचाल्यामपराण्हके. २७
सह्याद्रौ योगनिद्रायां सदा तिष्ठति योगिराट्
सुमेरुशिखरे सायं शुद्धयोगसमाधिना. २८
विराजति महाप्राज्ञो भक्तानुग्रहकारकः
तारचिंतनपारीणश्चावधूतोऽच्युतांशज. २८
अद्यापि वर्तते योगी सर्वत्र समदर्शनः
यत्र यत्र स्मरत्यार्तः पुमान् भक्त्या दिगंबरः. २९
तत्र तत्र समायाति भक्तानामिष्टदायकः
अलर्कायादि भक्ताय कार्तवीर्यार्जुनाय च ३०
जामदग्न्याय शुद्धाय स्वं मंत्रं चोपदिष्टवान्
दत्वा तेषामीप्सितार्थमद्यापि च महीतले. ३१

द्वापरे दत्तात्रेयांशतो व्यासमहर्षे रवतारः

संचरत्यनिशं गुप्तश्चावधूतसुवेषधृत्
स एव द्वापरे सत्यवतीगर्भे पराशरात्. ३२
व्यासनामा मुनिरभूल्लोकानुग्रहकारकः
वेदान् विभज्य सकलान् पैलादिभ्यः प्रदत्तवान्. ३३
स्त्रीशूद्रद्विजबंधूनां मुक्तये कृपया मुनिः
वेदार्थानुगतास्पष्टा दशाष्टादशतापसः ३४

पुराणानि महार्थोपपुराणानि चकार सः
भारतं पंचमं वेदं रचयित्वा महामुनिः ३५
चिंतयन् स सरस्वत्या स्तीरे नारदवाक्यतः
श्रीमद्भागवतं कृत्वा शुकायोचें सुताय च. ३६
रोमहर्षणपुत्राय सूताय च महामतिः
तस्मादहं द्वापरांते श्रुतवान् मुनिभिः सह. ३७
पुराणानि रहस्यार्थगोचराणीह तापस!
भविष्यत्कलिजातानां मुक्तये प्रोचिवान् मुनिः. ३८
तदाज्ञया चरन्नत्र भवद्भिः पृष्टवानिदम्
उद्युक्तोहं कथां वक्तुम् तस्मादुध्धृत्य मुक्तये. ३९
दत्तात्रेयस्य चरितं कलिकल्मषनाशनम्
पूर्ववृत्तं किंचिदुक्तं तव प्रश्नानुसारतः ४०
कृतकृत्योसि भोदीन! भूयः किं श्रोतुमिच्छसि?
इत्थं विदित्वा गुरुणा स दीनो दत्तस्य चारित्रमखंडभक्तिः
पुनः समूचे श्रवणोत्सुकात्मा सर्वैर्मुनीन्द्रैः सह वत्सलं तम्. ४१

इति श्रीब्रह्मण्डपुराणकथासारे, दत्तात्रेयजन्मपयः-
पारावारे, श्रीगुरुमहिमावर्णनरत्नावल्यां,
माणिक्यविजये, प्रथमभागे, दत्तात्रेय
चारित्रवर्णनं व्यासावतार
वर्णननामपंचमोऽ
ध्यायः.

ॐ



श्रीगुरु अवधूत!

श्रीसद्गुरु माणिक्यप्रभुमहाराजाय नमः!

# श्रीमाणिक्यविजयः

## प्रथमभागः

### षष्ठोऽध्यायः

ततः कलियुगे प्राप्ते दत्तस्य च महात्मनः
अवतारः कथमभूद्दीनोद्धरणहेतवे? १
कथं संस्थापयामास? धर्मान् वेदात्मकान् गुरो
एतत् सर्वं ब्रूहि दत्तस्य चरितं शुभम्. २

वत्सलः—

साधुपृष्टं महाभाग! हरेरद्भुतकर्मणः
चारित्रम् सर्वपापघ्नम् वच्मि सर्वं हिताय ते. ३
कलौ शंकर रूपेण तत्त्वतः सकलागमान्
अद्वैतं स्थापयामास शंकरो नीललोहितः. ४
तदा सर्वे ब्रह्मनिष्ठा बभूवुः शंकराज्ञया

तस्मादद्वैतमार्तैश्च संसेव्यं भवभीरुभिः. ५

दीनः—

कलौ शंकररूपेण तत्त्वतः परमेश्वरः
कथं संस्थापयामास? ह्यद्वैतमपुनर्भवम्. ६
अद्वैताचार्यवर्यस्य शंकराख्यस्य मस्करः
अद्याविद्याध्वंसिनः श्रीभाष्यकर्तुर्जगद्गुरोः. ७
चारित्रं ब्रूहि सकलं श्रोतॄणां सुखवर्धनम्
यथा विजित्य सकलान् नास्तिकादीन् दुरुहगान्. ८

वत्सलः—

शिवेनोक्तं पुरा देव्यै स्कांदे तत् प्रवदामि वः
यच्छ्रुत्वा गतसंदेहो भविष्यति न संशयः. ९

स्कंदः—

तदा गिरिजया पृष्टस्त्रिकालज्ञस्त्रिलोचनः
भविष्यच्छिवभक्तानां भक्तिं संवीक्ष्य, विस्मितः. १०
मौळिमांदोळयन् देवो बभाषे वचनं मुने!
शृणु त्वमेभिः प्रमथैर्मुनीशैश्च सुरैस्तथा. ११
प्रभावं शिवभक्तानां कलौ तु प्रभविष्यताम्
वदामि संग्रहेणैव श्रवणाद्भुक्तिमुक्तिदम्. १२
गोपनीयः प्रयत्नेन नाख्येयं यस्य कस्यचित्
पापघ्नम् पुण्यमायुष्यं श्रोतॄणां मंगळावहम्. १३
पापकर्मैकनिरतान्नरतान् धर्मकर्मसु
वर्णाश्रमपरिभ्रष्टान् शिष्टाचारोज्झितान् जनान्. १४
कल्यब्धौ मज्जमानां स्तान् विलोक्य क्रोशतोंऽबिके!
मदंशतः परेशानि कलावपि तपोधनम्. १५

केरळेषु तदा विप्रं जनयामि महेश्वरि!
तस्य सच्चरितं तेऽद्य वक्ष्यामि शृणु शैलजे! १

कलियुगे ब्रह्मादिप्रार्थनया जगद्गुरु-श्रीशंकराचार्यावतारः

कल्यादिमे महादेवि! सहस्रद्वितयात्परम्
सारस्वतास्तथा गौडा मिश्रा कार्णाजना द्विजाः. १
आमनीवासिनो शेषा आर्यावर्तानुवासिनः
औत्तराहा विंध्यगृहा भविष्यंति महीतले. १
शब्दार्थज्ञानकुशलास्तर्ककर्कशबुद्धयः
जैना बौद्धा बुद्धियुक्ता मीमांसानिरताः कलौ. १
वेदबोधितवाक्यानामन्यथैव प्रवर्तकाः
प्रत्यक्षवादकुशलाः शल्यभूता कलौ शिवे! २०
मिश्रशास्त्रमहाशस्त्रैरद्वैतच्छेदिनोऽबिके!
कर्मैव परमं श्रेयो नैवेशः फलदायकः. २१
इति युक्तिपरामृष्ट वाक्यैरुद्बोधयंति च
तेन घोरकुलाचारा कर्मसारा भवंति च. २२
तेषामुत्पाटनार्थाय सृजाम्याशु मदंशतः
केरळे शललग्रामे विप्रपत्न्यां महेश्वरि! २३
भविष्यति भविष्यज्ज्ञः शंकराख्योऽथ मस्करी
उपनीतस्तदामात्रा वेदान् सांगान् ग्रहिष्यति. २४
अब्दावधि ततः शब्दं विहत्य स तु तर्कजाम्
मतिं मीमांसमानोऽसौ कृत्वा शास्त्रेषु निश्चयम्. २५
मत्तवादिद्विपवरान् शंकरोत्तमकेसरी
भिनत्येव तथा बुद्धान् सिद्धविद्यानपि द्रुतम्. २६
जैनान् विजिग्येत रसा तथान्यान् कुमतानुगान्

तथा मातरमामंत्र्य परिव्राट् स भविष्यति. २७
परिव्राजकरूपेण मिथ्यानाश्रमदूषकान्
दण्डमुण्डार्यंचितकरः काषायवसनोज्वलः. २८
भस्मदिग्धत्रिपुंड्रांको रुद्राक्षाभरणैर्युतः
तारचिन्तनपारीणः शिवलिंगार्चनप्रियः. २९
स्वशिष्येभ्यो दिशन् शुद्धाद्वैतदिव्यसुधां शिवे!
मद्तत्वविद्यया विश्वविराजति शशांकवत्. ३०
सोऽद्वैतभेदकान् पापानुच्छिद्याक्षिप्य तर्कतः
स्वमतानुगतान् सर्वान् करोत्येव निरर्गलम्. ३१
तथापि प्रत्ययस्तेषां नैवस्याच्छ्रुतिदर्शने
मिश्रा शास्त्रार्थकुशलास्तर्ककर्कशबुद्धयः. ३२
तेषामुद्बोधनार्थाय तिष्यं भाष्यं करिष्यति
व्यासोपदिष्टसूत्राणामद्वैतमधुमुंचताम्. ३३
अद्वैतमेव सूत्राणां प्रमाणार्थं करिष्यति
अविमुक्ते प्रीणयति व्यासं भाष्यविचारतः. ३४
शंकरं स्तोति हृष्टात्मा शंकराख्योऽथ मस्करी.

श्रीशंकरः—

सत्यं सत्यं नेह नानास्ति किंचिदीशावास्यम् ब्रह्म सत्यं च बाह्य
ब्रह्मैवेदं ब्रह्मपश्चात् पुरस्ता देको रुद्रो न द्वितीयायतस्थे. ३५
एको देवः सर्व भूतेषु गूढो नानाकारैर्भाति भासैस्तदात्मा
पूर्णापूर्णो नामरूपै विहीनो विश्वातीतो विश्वनाथो महेशः. ३६
भूतं भव्यं वर्तमानं त्वमीश सामान्यं वै देशकालाधिहीनः
नांतो मूर्तिर्वेदवेद्यस्त्वसंगः संगीव त्वं लिंगसंस्थो विभासि. ३७
त्वद्भासा वै सोमसूर्यानलेंद्रा भीषो देति ह्येष सूर्यश्च देवः

त्वं वेदादावेक एव स्वरोसि वेदैर्धूतेशात्मभेदैर्हि वेद्यः. ३८
ओंकारार्थः पूरुषस्त्वंतरंच सत्यज्ञानानंदभूमासि सोम
बद्धो मुक्तो नासि संगो ह्यसंगो प्राणप्राणस्त्वं मनो मानसस्य. ३९
त्वत्तो वाचो मानसा सन्निवृत्ता स्त्वावानन्दज्ञानिनो ब्रह्मभावाः
त्वत्तो जातं भूतजातं महेश! त्वसोजीवत्यंवमेवं विचित्रम्. ४०
त्वामेवांते संविशत्यंव विश्वम् त्वां वै को वा स्तौति संस्तव्यमीशम्?
किंचिद् ज्ञात्वा सर्वभासावबुध्व त्वामात्मानं वेत्ति देवं महेशम्. ४१

ईश्वरः—

इति शंकरवाक्येन विश्वेशाख्यादहं तदा
प्रादुर्भूय महालिंगादलिंगोऽपि महेश्वरि! ४२
त्रिपुंड्रविलसत्फालश्चन्द्रालंकृतशेखरः
नागाजिनांबरोऽसंगो नीलकंठस्त्रिलोचनः. ४३
वरकाकोदराधीश राजद्धारस्त्वथांबया
तं वक्ष्यामि महादेवि! ससंतं यतिनां वरम्. ४४
शिष्यैश्चतुर्भिश्च युतं भस्मरुद्राक्षभूषणम्

ईश्वरः—

मदंशतस्त्वं जातोसि मुख्यद्वैतप्रसिद्धये. ४५
पापमिश्राश्रितैर्मार्गैर्जैनदुर्बुद्धिबोधितैः
भिन्ने वैदिकसिद्धांते ह्यद्वैते द्वैतवाक्यतः. ४६
तद्भेदगिरिवज्रस्त्वं संजातोसि मदंशतः
दूर्वासशापतो भूमौ जातां वाणीं विजित्यताम्. ४७
अगस्त्यचरितं देशे तुंगातीरे सुनिर्मले
पुण्यक्षेत्रे द्विजवर स्थापयित्वा सुपूजय. ४८
यत्रास्ति ऋष्यशृंगस्य महर्षेराश्रमो महान्

कलावपि ततोऽद्वैतमार्गख्यातो भविष्यति. ४९
द्वात्रिंशत्परमायुस्ते शीघ्रं कैलासमावस
एतत् प्रतीगृहाण त्वं लिंगपंचकमर्चय. ५०
भस्मरुद्राक्षसंछन्नः पंचाक्षरपरायणः
शतरुद्रावर्तनैश्च तारेण भसितेन च. ५१
विल्वपत्रैश्च कुसुमैर्नैवेद्यविविधैरपि
त्रिवारं सावधानेन गच्छ सर्वजयाय च. ५२
स शंकरो मां प्रणिपत्य मस्करी यशस्करी तस्करनाथमार्ये
संगृह्य लिंगानि विजेतुकामो गंता सबुद्धार्हत मिश्रजैनान्. ५३
कांच्यां तपस्सिद्धिमवाप्यदंडी चंडीश्वरात्मार्हतमिश्रजैनान्
विजित्य भाष्ये विवृतिं च कांक्षन्नखंडयन् मंडनमात्मवादे. ५४
वाणीं विजेतुं नृपदेहमेत्य जग्राहतत् स्त्रीवशकामतंत्रम्
विबोधितः शिष्यवचोविचारैः श्रुत्यंतसिद्धांतकृतप्रचारैः. ५५
पुनः स्वकं देहमवाप्य तूर्णं पूर्णं निजं काममथा कलय्य
जित्वा निमिषाद्रिरमृष्यशृंग गिरौ प्रतिष्ठापितवान् महात्मा. ५६
कापालिकं तं क्रकचं महोग्रं कर्णाटदेशोद्भतमाशु जित्वा
गोकर्णमासाद्य तमीशमीड्यं स्तुत्वा महाराष्ट्रपदं प्रपेदे. ५७
तत्रस्थितान् भास्करभट्टमुख्यान् स्तान् नीलकंठ च तृणीकरिष्यन्
काश्मीरमासाद्य सशारदायाः सर्वज्ञपीठं पदमारुरोह. ५८
तत्रस्थितान् संपदि सर्वसूरीम् श्चार्यांकमुख्यान् विपुलान् विजित्य
सदक्षिणद्वारकवाटभेदं चकारदेव्यैव विशंक्यमानः ५९

**श्रीशंकराचार्याणां कैलासयात्रा**

शंकां निराकृत्य स शारदायास्ततो बदर्याश्रममाप दंडी
संपूज्य नारायणमुष्णवारा शीतार्तशिष्यान् सकलानरक्षत्. ६०

ध्यात्वा शिवं तत्र निषण्णमेनं कैलासदेशाद्वृषभश्च देवाः
समेत्य संस्तुत्य यदायुषस्ते कालोऽगमत् त्वं वृषभेऽधिरोह.
इत्यर्थितः सन् प्रभुरात्मनि स्वं विचिंत्य शिष्यान् निजगाद मोदात्
यूयं चतुर्दिक्षु मठेषु लिंगैः साकं चरंत्वित्युपदिश्य हर्षात्.
आरुह्य पृष्ठं वृषभस्य हस्तं संगृह्य धातुर्हरिशक्रशास्तः
सर्वैश्च देवैरभिवंद्यमानः कैलासमेष्यत्यसमानसौख्यम्.
एतत्तेऽभिहीतं देवि! मुख्यं मुक्तिपदावहम्
शांकरं चरितं लोके प्रसिद्धं हि भविष्यति.
इति श्रुत्वा महेशानी चरितं शंकरस्य सा
संजातपुलका शंभुं प्रणनाम महेश्वरी.

वत्सलः—

इति स्कांदोक्तमाखिलं श्रीशंकरकथामृतम्
पीत्वाहं सद्गुरोः सूताद्युष्मानद्य ह्यपाययम्.
इममध्यायममलं यः पठेद्भक्तिसंयुतः
स याति शिवसायुज्यं नात्र कार्याविचारणा.

इति श्रीब्रह्मण्डपुराणकथासारे, दत्तात्रेयजन्मपयः-
पारावारे, श्रीगुरुमहिमावर्णनरत्नावल्यां,
माणिक्यविजये, प्रथमभागे, श्रीजगद्गुरु
शंकरचरित्र वर्णनं
नाम षष्ठोऽ
ध्यायः.




श्रीगुरु अवधूत!

श्रीसद्गुरु माणिक्यप्रभुमहाराजाय नमः!

# श्रीमाणिक्यविजयः

प्रथमभागः

सप्तमोऽध्यायः

वत्सलः—

श्रीगुरुः शंकराचार्यः करुणासागरो हरः
इत्थं कलियुगे शुद्धाद्वैतं संस्थाप्य यत्नतः। १
सन्यासधर्ममलं योगिनामपि दुर्लभम्
उपदिश्य सुरेशादिस्वशिष्याणां महादरात्। २
सूत्रगीतोपनिषदां भाष्याणि सुमहांत्यपि
आद्वात्रिंशद्वर्षमुर्व्यां स्थित्वागाद्धिरिशालयम्। ३
तदा कलिप्राभवेनचाद्वैतं खसुमायते
यदा श्रीशंकराचार्यः कैलासमगमन्मुने! ४

तदानीमेव सकला जना भेदाध्वना श्रुतः
निश्चित्य तर्कवादैश्च नास्तिका अभवन्मुने! ५
भिक्षा बौद्धाश्च पाषंडा क्षपणाश्च दिगंबराः
तदा चुक्षुभिरे सर्वाः प्रजा दुःखेन पीडिताः. ६
नरा नार्यश्च सर्वत्र पशुभूताः सदा मुने!
तादृक्प्रजाः समालोक्य दत्तात्रेयांतिकं सुराः. ७
समेत्य जगदुद्धर्तुं शुद्धाद्वैतोपदेशतः
दुष्टान् जहि महाप्राज्ञ! शिष्टान् पालय भूतलं. ८
इत्ययाचंत तं सोऽपि दत्तात्रेयो महामतिः
अवतारं मतिं चक्रे तिष्ये घोरं परात्परः ९
पूर्ववाक्यं स्मरन् भक्त कार्यसिद्ध्यर्थमादरात्
अजायत द्विजकुले सोऽत्रिर्भूमौ शिवाज्ञया. १०
अनसूया जगद्धात्रि संभूता स्वांशतः क्षितौ
जातौ ज्ञात्वा स दत्तस्तु पितरौ भूतले क्वचित्. ११
अवधूतेन वेषेण चचार भुवनेऽमले
केदारं बदरीं रम्यां हरिद्वारं यदृच्छया. १२
ब्रह्मवर्तं पुष्करं च प्रयागं काशिकापुरीम्
अयोध्यां गोकुलं चित्रकूटं च परमार्थदम्. १३
गंगां सरस्वतीं नंदां कावेरीं यमुनानदीम्
फल्गुनीं सरयूसिंधुम् गंडकीं च मरुद्धतीम्. १४
शोणां पयस्विनीं ताम्रपर्णीं तुंगां च गोमुखीम्
तत्र तत्र स्थितान् देवान् मुनीनालोक्य योगिराट्. १५
उपदिश्य तथा ज्ञानं योगानन्यांश्च सर्वतः
माहात्म्यम् दर्शयन् स्वस्य सर्वेषां योगिपुंगवः. १६

कृष्णवर्णां क्रमाद्योगी प्राप पापविनाशनीम् १७
तत्र रम्यस्थले क्षेत्रं सम्यक्कल्पयितुं हरिः.
कलिसंतरणार्थं च स्वभक्तानां हिताय च १८
सर्वेषां गोचरो भूत्वा सर्वेष्टफलदित् सतां.
अवतर्तुं निश्चिकाय त्रिकालज्ञो महेश्वरः १९
सर्वदेवैः प्रार्थितस्सन्नंत्रेर्भक्त्या च तापस!
चित्रं चिकीर्षुरवनौ दण्डकाषायमंडितः २०
रुद्राक्षाभरणैर्भस्मरेखाभिः समलंकृतः.
चचार भुवने रम्ये नानाचित्रविनोदितं

दत्तात्रेयांशतो गंधर्वनगरे श्रीपादश्रीवल्लभमुन्यवतारः

नवपंचग्रयंबुराशिमिते काले गते कलेः. २१
प्राग्देशे पीठपुर्यांश्च नानावनविचित्रिते २२
मन्दारमुखपुष्पौघ वासिते पिककूजिते.
तत्र कश्चिद्द्विजवरो वेदवेदांगपारगः २३
धर्मज्ञः सत्यवादी च श्रौतस्मार्तादिकर्मकृत.
यजुरध्ययनासक्तः शक्तः सर्वकलासु च २४
राजनामास्त तद्भार्या सुमती पतिदेवता.
तयोर्भक्त्यातिसन्तुष्टस्तस्यामाविर्भभौ मुनिः २५
जातस्य बालकस्यांघ्री श्रीपद्मे इव रजतुः.
राजचिह्नान्यनन्तानि लक्ष्मीवंति लसंति यत् २६
श्रीपादश्रीवल्लभाख्यां शिशोश्चक्रे ततः पिता.
तदभीष्टं पूरयित्वा लोकानुद्धर्तुमादरात् २७
कृष्णातीरं महाक्षेत्रं कुरवाख्यं सुपुण्यदम्.
तत्रैव वासमकरोत् सिद्धासनविशुद्धधीः

तत्क्षेत्रदर्शनादेव नृणां मुक्तिर्भविष्यति. २८
कदाचिद्ब्राह्मणोऽभ्यागात् सभार्यो दंडिनं प्रति
साष्टांगं प्रणिपत्याग्रे तुष्टावच कृतांजलिः. २९
स्वामिन्! दुःखाग्निसंतप्तश्चागतोस्मि त्वदंतिकं
मृतप्रजा मे ललना दरिद्रः क्षुत्तृडाकुलः. ३०
त्वत्पादमेव शरणं याचे मां तारयाधुना
इत्युक्त्वा स रुरोदोच्चैर्माधवस्त्वंबिकाधवः. ३१
रोदनध्वनिमाकर्ण्य करुणासागरो मुनिः
श्रीपादश्रीवल्लभस्तु प्रोवाच द्विजपुंगवम्. ३२
मा रोदीर्मोचयाम्यद्य दुःखं तवदुराधिदम्
त्रयोदश्यां मंदवारयुतायां तु निशामुखे. ३३
भक्त्या सभार्यः श्रीशंभोरर्चनं कुरु संततम्
तेन ते संततिर्भूयान्नात्रकार्याविचारणा. ३४
इत्युक्त्वा प्रददौ तस्य विधिं वेदैकचोदितम्
यतेः सकाशात् संगृह्य व्रतं कर्तुं समारभत्. ३५
तेन पुण्यप्रभावेन गतपापोऽभवत् क्षणात्

### श्रीपादश्रीवल्लभानामंशतो नृसिंहसरस्वतीनामवतारः

इत्थं बहुष्वतितेषु दीनेषु यतिराट् स्वयम्. ३६
आविर्भूवांबिकायां नवखाब्धियुगे कलेः
कलावद्वैतसिद्ध्यर्थं सिद्धसंघनिषेवितः. ३७
करंजनगरे रम्ये माधवस्य गृहेऽमले.
नरसिंह इवाभाति बाल्येऽपि तपसा शिशुः. ३८
सरस्वतीमुखे तस्यो वासयत् तेन हेतुना
नरसिंहसरस्वत्यभिख्यया ख्यातिमाप सः. ३९

प्रदर्शयन् स्वस्यलीलां तत्र तत्र मुनीश्वरः ४०
क्रमाद्गंधर्वनगरमगात् साधुहिताय च.
यत्रास्त्यमरजामीमा संगमः सर्वतीर्थयुक् ४१
औदुंबरतरुर्यत्र दत्तात्रेयो विराजते.
तस्माद्गंधर्वनगरमाहात्म्यं भुविमुक्तिदम् ४२
यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते नात्रसंशयः.

इति श्रीब्रह्मण्डपुराणकथासारे, दत्तात्रेयजन्मपयः-
पारावारे, श्रीगुरुमहिमावर्णनरत्नावल्यां,
माणिक्यविजये, प्रथमभागे, श्रीपाद
श्रीवल्लभनृसिंहसरस्वत्युत्पत्ति
कथनं नाम सप्तमोऽ
ध्यायः.

ॐ



श्रीगुरु अवधूत!
श्रीसद्गुरु माणिक्यप्रभुमहाराजाय नमः!

# श्रीमाणिक्यविजयः

प्रथमभागः
अष्टमोऽध्यायः

दीनः—
श्रुता गुरो दत्तकथावरेण्या भीनत्यघानि श्रुतिमाङ्गतो या

अस्मत्पुरासंचितपुण्यलब्धा त्वत्तः सुधाजेतृवचोविचारात्. १
शश्वच्चरित्रं वद दत्त मूर्तेर्यद्वर्णनं दुर्लभ एव भूमौ
तथापि नस्तच्छ्रवणप्रमोदो नवोनवोऽश्रांतमुदेति सत्यम्. २
नृसिंहवाणीयतिराश्रितानां कैवल्यदानाय ययौ स काशीम्
श्रीकृष्णमिश्रात् किलदेशिकेंद्रात् क्रमाद्यतित्वं समवाप विद्वान्. ३
संस्थाप्य धर्मानखिलांश्च काश्यां ययौ स तीर्थाटनतत्परस्सन्
क्षेत्रेषु पुण्यायतनेषु साधुः शिवालयादौ विचचार योगी. ४
दत्तस्ततः श्रीमणिचूलशैले स्त्वोररत्तिमाज्ञाय महानुभावः
दरीनृसिंहस्य विलोकनाय पुरीं प्रतस्थे विदुरस्य रम्यम्. ५
तत्रस्थ ब्राह्मणः कश्चित् केशवाख्योऽतिशुद्धधीः
लक्ष्म्यख्यया भार्ययात्र व्यतानीत् तप आदरात्. ६
तदागतं यतिं दृष्ट्वा नरसिंहसरस्वतिम्
संपूज्य विधिवद्विप्रस्तनेष्टार्थमवाप सः. ७

दीनः—

दत्तस्य मणिचूलाद्रावक्तारे मतिः कथम्?
संजाता हेतुना केन? कस्मादागतवान् यतिः? ८
कोऽसौ केशवविप्रस्तु? का लक्ष्मीस्तस्यवल्लभा?
किं प्राप्तस्तेनयतिना? स्वाभीष्टः सर्वसौख्यदः. ९
एतत्सर्वं मम ब्रूहि संशयोऽस्ति महाप्रभो!
त्वां विना संशयभेत्ता कोऽन्योस्ति? भुवनत्रये. १०
इत्युक्तो मुनिना तेन दीनेन कृपया मुनीः
वत्सलः प्राह विनयात् दीनं तापससत्तमम्. ११

वत्सलः—

रहस्यं पृष्टवान् ब्रह्मन् दत्तमाहात्म्यमद्भुतम्

तथापि वक्ष्ये शुभाख्यः सर्वेषां मुक्तिसाधनम्. १२

**श्रीपादश्रीवल्लभनृसिंहसरस्वतीनां माहात्म्यवर्णनम्**

श्रीपादश्रीवल्लभस्तु क्षेत्रे कुरवकाभिधे
वसन् विस्तारयामास माहात्म्यं स्वस्य निर्मलम्. १३
कदाचित् कृष्णवेण्यां स स्नानार्थं समगान्मुनिः
तस्यां ददर्श स्त्रीसंघश्चरंतं यवनप्रभुम्. १४
नावमारुह्य सकलविभवैः स्वजनैर्युतः
तदानीं रजकः कश्चिद्राजानं विभवैर्युतम्. १५
दृष्ट्वानिमिषनेत्राभ्यां स्थितश्चित्रस्थवत् पुमान्
तं दृष्ट्वा भ्रांतहृदयं रजकं मुनिवल्लभः. १६
तस्य दर्शयितुं स्वस्य माहात्म्यमवदद्गुरुः

श्रीपादश्रीवल्लभः—

कस्माद्विलोकसे? त्वं तं राजानमवलायुतम्. १७
तद्वैभवं तवासीद्वा मतिस्तद्भोगलिप्सया.
सत्यं वद महाभाग! वरदोऽस्मि तवाधुना. १८
इत्युक्तो लज्जयावोचद्रजकस्तापसोत्तमम्.

रजकः—

शुनकः शक्रसमतां याति किं? नीचवंशजः १९
सोऽहं महाराजभोगान् कथं प्राप्नोमि? सद्गुरो!
भाग्यहीनस्य मे देव! कृतपुण्यक्रियाततेः. २०
नो यांति दर्शनं स्वप्रेप्यसत्संगस्य दुर्मतेः
दैवमेव परं देव! सर्वेषां भाग्यकारणम्. २१
भ्रमत्येव वृथाचेतः किं करोमीह? राजनि

इत्युक्तो रजकं प्रोचे करुणासागरो मुनिः. २३

श्रीपादश्रीवल्लभः—

भविष्यज्जन्मनि भवान् राजास्या मम वाक्यतः
तस्मिन् भोगानिन्द्र इवानुभूय त्वं सुखास्पदान्. २४
मत्पदं प्राप्स्यसि प्रांते न वृथा ममदर्शनम्
तच्छ्रुत्वा वचनं चित्रं रजको गुरुमब्रवीत्. २५
साष्टांगं प्रणिपत्याग्रे विनयाद्भक्तिसंयुतः

रजकः—

लंघते पंगुरप्यद्रिं त्वत्प्रसादान्नसंशयः. २५
द्रूयते हृदयं देव! प्राप्तनीचजनंर्मम
हीनजन्मापि भगवन् भक्तेष्टार्थप्रदायिना. २६
भवतानुग्रहीतोऽहं कृतार्थो भवमंजसा
विनात्वद्दर्शन महं न जीवामि क्षणं गुरो! २७
त्वत्पादभक्तिरचला भवेज्जन्मनि जन्मनि
इत्थं वदंतं रजकं दयालुः प्राह सद्गुरुः. २८

श्रीपादश्रीवल्लभः—

तवाभीष्टार्थसिद्धिः स्याद्भावि जन्मन्यसंशयम्
इत्युक्त्वांतर्धिमापासौ यतिराण्मुनिपुंगव. २९
हित्वा तज्जन्मरजको म्लेच्छराजान्वयेऽमले
रम्ये विदुरदेशाधिपतौ जातः स सुंदरः. ३०
सत्संगात् दुरितैर्मुक्तः श्रीमतां निलये शुभे
क्रमाद्वृद्धिं गतः सोऽपि राजाभूज्जितशात्रवः. ३१
विदुराख्यपुरीदुर्गे स रेजे विभवैर्मुदा
नृसिंहवाणीनाम्नासौ श्रीपादश्रीसुवल्लभः. ३२

रजकस्य वचश्श्रुत्वा यतिवेषेण योगिराट्
दुर्गं विदुरपूस्संस्थमगाच्छिष्यैः परीवृतः. ३३
तं दृष्ट्वा यवनधीशो दूरान्नत्वा यतीश्वरम्
पूर्वजन्मस्मृतेर्वाक्यमूचे विस्मितचेतसः. ३४
हर्षगद्गदसंदिग्धमानन्दाश्रुविजृंभितम्

यवनः—

आदौ ब्रह्मत्वमेकस्त्रिभुवनजनता पालनार्थं हि भूमौ
भूत्वा चात्रिद्वितीयोदरसलिलनिधाविंदुवद्दत्तसंज्ञः
अज्ञानध्वांतसूर्यः स सुखमुपदिशन् ब्रह्मतत्त्वं नतानाम्
यो रेजे तन्नमामो नृहरियतिवरं योगिराजं महेशम्. ३५
यो भीमामरजासुसंगमतटेत्वौदुंबरानोकह
च्छायायां कृतनीड उत्सुकधिया सम्यक्तपोस्मिन् व्यधात्
गंधर्वाख्यपुरे वसन् श्रितजनाभीष्टार्थसंदानदात्
तं श्रीमन्नरसिंहवाण्यभिधयाख्यातं हि दत्तं नुमः. ३६
ध्यात्वा यत्पदमादराद्धरिहरब्रह्मात्मकस्याखिला
धारश्यामलतत्त्वबोधरसिकस्याराज्जनाः संसृतिम्
तीर्त्वा सौख्यमगाधबोधरुचिरं ते यांति तं संततम्
वंदे श्रीनरसिंहवाण्यभिधयाख्यातं महादेशिकम्. ३७
सन्तत्युद्भवरूपवांछितफलं यःकाकवंध्यास्त्रियाः
शुष्कौदुंबरभूरुह; किसलयं प्रत्यग्रमन्यग्रधीः
मूकस्याखिलवेदपाठपटुतां दत्वा नयत्तान् मुदम्
तस्मै योगिवराय मामकमनः श्रीमन्नृसिंहायते. ३८
दीनाबंधुगिरः परासुनिकटे यो जीवयन् तं मृतम्
तद्बंधूनाखिलानतोषयदरं स्वर्वैतरौदार्यतः

कुष्ठव्याधियुतं प्रदीप्तवपुषं चक्रे द्रुवास्संचनात्
तं वंदे नरसिंहवाण्यभिधयाख्यातं गुरुम् संततम्. ३९
स्तुत्वेत्थं यवनः सम्यङ् नत्वा प्रोचे कृतांजलिः
त्वत्पादपूजानर्होऽहमभूवमिह जन्मनि. ४०
ज्ञात्वा पितं प्रभावं च दूयते हृदयं गुरो!
किं करोमि? वृथैवाशाममाभूत् तवपूजनं. ४१
इतिस्तुवंतं यवनं स्वजनैः संयुतं विभुम्
प्रोवाच मधुरां वाणीं भाव्यर्थं सूचयन् गुरुः. ४२

नृसिंहसरस्वती—

तवाभीष्टार्थसिद्धिस्स्यात् त्वत्प्रजानां च भूपते!
कालादल्पाज्जनिष्यामि श्रेष्ठे श्रीभार्गवान्वये. ४३
तस्मिन्नप्यवतारं च तद्विधश्च समर्हणाम्
स्वीकरिष्याम्यसत्यं स्याद्भाषणं मे न जात्वपि. ४४
तदा सर्वमतस्थापकार्योऽहं सर्वमानवैः
सुपूजितो भविष्यामि नात्र कार्याविचारणा. ४५
इत्युक्त्वागाद्यतिश्रेष्ठः क्षेत्रं नरहरेर्मुने!
तत्राप्यागत्य यवनो गुरोः सेवां चकार सः. ४६
फलपुष्पाणि रम्याणि क्षौद्रक्षीराज्यशर्कराः
दत्वा ननाम शिरसा स्तुत्वापि च पुनः पुनः. ४७
तदाज्ञया ययौ गेहं यवनः स्वजनैर्युतः
दरीनृसिंहनिकटं स्नात्वा यतिवरस्तदा. ४८
शिष्यैः परिवृतः सम्यक्पूजां कर्तुं समारभत्
पूजांते विधिवन्नत्वा स्तुत्वा नरहरिं मुदा. ४९
नृसिंहाग्रे स्थितं रम्यं यतिं दत्तांशसंभवम्

केशवो जामदग्न्यांशजातः प्रतापोधनः. ५०
भार्यया सहीतस्तत्र विलोक्य नियतः शुचिः
साष्टांगं प्रणिपत्याग्रे सस्थितोऽभूत् तदाज्ञया. ५१
श्रीनृसिंहसरस्वतीशुभसत्कथां प्रपठन्नरः
सर्वभाग्यमखंडसंततिमेति देवदयावशात्
तस्य नामसकृद्गृणन् वरमुक्तिमाशु लभेत च
दत्र पुष्कलमैहिकं नृषु संभवेदिति कि पुनः? ५२

इतिश्रीब्रह्मण्डपुराणकथासारं, दत्तात्रेयजन्मपयः-
पारावारं, श्रीगुरुमहिमावर्णनरत्नावल्यां,
माणिक्यविजये, प्रथमभागे, श्रीपाद
श्रीवल्लभनृसिंहसरस्वत्योश्चरित्र
वर्णनंनामाष्टमोऽ
ध्यायः.



श्रीगुरु अवधूत!
श्रीसद्गुरु माणिक्यप्रभुमहाराजाय नमः!

# श्रीमाणिक्यविजयः

## प्रथमभागः
## नवमोऽध्यायः

वत्सलः—
श्रुणु त्वं पूर्ववृत्तांत केशवस्य महात्मनः

लक्ष्म्याः पतिव्रतायाश्च श्रुत्वा यन्मुक्तिमेष्यतिः.

## परशुरामस्यक्षत्रियकुलनाशनोद्विग्नमनसः श्रीमद्दत्तात्रेयस्य च परस्परदर्शनम्

पुरा भार्गवरामस्तु जामदग्न्यः प्रतापवान्
निःक्षत्रियां धरा कृत्वा क्रोधाविष्टः कुठारवान्. २
शमंतपंकक्षेत्रं तद्रक्तैः पूरयन्महत्
ईजे बहुविधैर्यज्ञैर्देवदेवं रमापतिम्. ३
तत्कृतेन तु यागेन तुष्टस्सन् जगतां प्रभुः
प्रत्यक्षोऽभूद्भार्गवस्य सम्मुखं विभवैर्युतः. ४
तं दृष्ट्वा देवदेवेशं नारायणमनामयम्
वरं ययाचे भगवान् रामश्चिंतातुरस्तदा. ५

भार्गवः—

क्रोधाविष्टः क्षत्रियाणां कुलं संहृतवानिह
तदघक्षाळनार्थं च कृतवान् यज्ञमुत्तमम्. ६
तथापि चित्तं मे शुद्धं नाभूद्विष्णो! तपस्यतः
अत्रोपायं ब्रूहि देव! यतः शुद्ध्येन्मनः सदा. ७
इत्युक्तः स उवाचामुं भाव्यर्थमनुचिंतयन्
कलिदोषनिरासार्थं केशवो वचनं मधु. ८

नारायणः—

दानेन तपसा यज्ञैर्नशांतिमधिगच्छति
चेतो यस्य गुणैर्विद्धं किं तु ज्ञानेन गच्छति. ९
यतः स्वज्ञानसिद्ध्यर्थं गुरुम् स्वांततमोऽपहम्
अत्रास्ति नर्मदातीरे दत्तात्रेयो महामतिः. १०

तेनोपदिष्टमार्गेण शांतिं प्राप्नोषि सौख्यदाम्
तं याहि शरणं वत्स! मा कुरुष्वात्र संशयम्. ११
इत्युक्त्वांतर्दधे देवः करुणासागरो हरिः
तद्वाक्यादागतस्तीरं नर्मदायाः स भार्गवः. १२
तत्रावधूतमार्गेण चरंतमकुतोभयम्
काषायवसनं मौनमुद्रितं जटिनं प्रभुम्. १३
वेदैश्चतुर्भिः शुनकात्मभिश्च परिवेष्टितम्
तापसं योगपीठस्थं रामो नत्वाऽब्रवीदिदम्. १४

रामः—

गूढश्चरसि सर्वेषामदृश्यः सिद्धसंज्ञकः
दत्तात्रेयत्वमेवेति मन्ये वैकुंठवाक्यतः. १५
संसारामयतप्तानां भेषजश्चित्सुखस्थितः
वेदवाचामगम्यस्त्वं योगिनां हृदयंगमः. १६
आत्मैकस्सर्वभूतानामात्मासि परमार्थतः
परात्परतरं ब्रह्मत्वामहं सततं भजे. १७
नमो वेदांतवेद्याय वेदातीताय धृष्णवे
आदिमध्यांतहीनाय सदानंदायते नमः. १८
यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा
साक्षिणं तस्य सर्वस्य त्वामहं शरणं व्रजे. १९
श्रुत्वा दत्तस्तु तद्वाक्यं त्यक्त्वा स्वं वेषमग्रतः
निजरूपेण तं प्रोचे भार्गवं विनयान्वितः. २०

परशुरामायदत्तात्रेयकृतोपदेशः

दत्तात्रेयः—

भूभारहरणार्थाय जातोसीह मदंशतः

हैहयादीन् खलान् सर्वान् राजाभासान्यतोवध्र:. २१
उपकर्तुर्न ते दोषः किंचिदत्र परत्र वा
तथापि वक्ष्यं विहितं तवभाव्यर्थसिद्धये. २२
पूर्वमेव मयोक्तं यन्मंत्रं दत्तात्मकं महत्
तत्प्रभावेन ते शक्तिरंधते भाधकोज्झिता. २३
सर्वं संपादितं भूमौ भार्गवसत्तमः
इदानीमपि तज्ज्ञानं प्राप्य मुक्तश्चरावनौ. २४
कलिसंतरणायाहं जनिष्यामि शुभास्पदः
अत्रेर्दत्तं मया पूर्वं त्रिवारं वचनं शुभम्. २५
त्वत्पुत्रोऽहं भवामीति त्रिजन्मसुविशेषतः
तस्माज्जातु चिदुक्तिर्मे नानृता भवितानघ! २६
अतस्त्वं भुवि ते वंश विस्तारय ममाज्ञया
तद्गोत्रेऽहं जनिष्यामि मदाराधननिर्मले. २७
तदा त्वदिष्टार्थसिद्धिः पूर्णाराम न संशयः
यस्मिन कुले जन्म मे स्यात् तद्वंशः पावनः सदा. २८
इत्युक्त्वागात् स सह्याद्रिं दत्तात्रेयो महामुनिः.

दत्तात्रेयाज्ञया परशुरामस्य मल्लारिक्षेत्रसंचरणम्

तदाज्ञां शिरसा धृत्वा रामः पुण्यतमः परः. २९
क्षेत्राटनपरः सम्यक्चचार भुवनांतरम्.
मल्लारीक्षेत्रमागत्य यत्रास्ते माळसापतिः. ३०
दिनानि कतिचिन्नीत्वा कलावपि तपोधनः
तत्रस्थमुनिवर्याणामुपदिश्यगतिं शुभाम्. ३१
पूर्ववाक्यमनुस्मृत्य स्वान्ववाये सुनिर्मले
जननार्थे मतिं चक्रे दत्तात्रेयाज्ञया पुनः. ३२

शिवरात्रिदिवसे शिवपूजानिरतस्य भावमुनयं
परशुरामदत्तसंततिरूपफलप्रदानम्

भृगोर्वंशे कश्चिदासीत् भावुनामा द्विजोत्तमः
तस्य भार्या सुरत्नाख्या पातिव्रत्यपरायणा. ३३
माळसारतिपूजायां निरतः शुद्धमानसः
शिवरात्र्यां कदाचित् सः स्नात्वा श्रीरुद्रतीर्थके. ३४
माळसापतिमभ्येत्य सभार्यः प्रीतमानसः
पूजयामास विधिवच्छंकरंत्विष्टदैवतम्. ३५
रात्रौ जागरणं कृत्वा स्तुत्वा शंभुमनामयम्
भोजनं कारयामास ब्राह्मणानामुपस्यथ. ३६
तदानीं भार्गवो विप्रवेषेणागत्य हृष्टधीः
आसीद्विश्वासमधुरं तद्दत्तान्नं सुधोपमम्. ३७
जज्ञे स लोकरक्षार्थं तपोयोगादिमान् वली
सुरत्नायां भावुनाम्नस्तेजसा च विशेषतः. ३८
वंशे भृगोः सुविमले माळसापत्यनुग्रहात्
रेजे शिशुः सर्वशीलगुणौदार्यविभूषितः. ३९
श्रीजामदग्न्यांशभवं कुमारं नाम्ना पिता केशव इत्युदीर्य
विधाय चौलादिविधीनथामुमधीतविद्यं बुधराट् स चक्रे. ४०

इतिश्रीब्रह्मण्डपुराणकथासारं, दत्तात्रेयजन्मपयः-
पारावारं, श्रीगुरुमहिमावर्णनरत्नावल्यां,
मार्तिक्यविजये, प्रथमभागे, भावुनाम्नि
परशुरामांशात् केशवोत्पत्तिकथनं
नाममनवमोऽध्यायः.

ॐ



श्रीगुरु अवधूत!

श्रीसद्गुरु माणिक्यप्रभुमहाराजाय नमः!

# श्रीमाणिक्यविजयः

## प्रथमभागः

## दशमोऽध्यायः

वत्सलः—

स केशवः प्राग्रहरं हराग्रवंशेऽनुवसं ववृधे कलाभिः
कल्याणपुर्यामरिचित्तशल्यः कल्यार्त्यनायत्तमहेशतुल्यः. १
रराज चक्रीव स भूसुराग्र्यः श्रीवत्सचिह्नो वसुदेवमान्यः
श्रीराममनामामृतपानपूज्यः सत्याश्रयः साधुयशोदयाढ्यः. २
भार्याभवत् केशवभूसुरस्य नाम्ना रमा श्रीसुगुणाभिरामा
बहुप्रणामा व्रतपूर्णकामा लावण्यसीमा युवतीललामा. ३
रामः स्वसेवार्चनवंदनैश्च विप्रस्य साक्षात्कृतवान् रहस्यं
तयोरतानीदभिलाषसंघं यथा यथा प्रार्थितमादरेण. ४

॥ नृसिंहमुन्युत्पत्तिकथनम् ॥

दरीनृसिंहस्य तटे कदाचिद्भार्यायुतः केशवविप्रवर्यः
सन्तानकामः सकलेंद्रियाणि जित्वा हठात् तत्र तपोन्यतानीत्. ५
स्वप्ने समागत्य नृकेसरी तमूचे मुने! त्वत्तपसास्मि तुष्टः
मदाख्यया ते भविता सुतस्त्वं याहि स्वगेहं नहि संशयोऽत्र. ६
लब्ध्वा वरान् केशवनामधेयः सत्यान्यधात्तेज अनंतसंज्ञम्
शुभे दिने सा सुषुवे कुमारं राधे सिते भूततिथौ प्रदोषे. ७
जातस्य पुत्रस्य पिता स चक्रे नृसिंहनाम प्रमदात् सबंधुः
महोत्सवोऽभून्नगरे तदानीम् दानानि सर्वाण्यदिशद्द्विजेभ्यः ८
कुर्वत्सु सर्वेषु जनेषु तस्मिन् दयां स बालो ववृधे नृसिंहः
सदा सदामोदरतः सुभक्तः पित्रोर्गुरोः साधुजनावळीषु. ९

॥ नृसिंहमुनिवाचादेवीकृतश्रीराममंत्रजपहनूमन्मंत्रोपासनक्रमः ॥

वागीश्वरी तस्य सती रमेव रेजे नृसिंहार्चनया सदा सा
कल्याणपुर्याश्रयजातगेहा कामप्रसूः कामकलासुशस्ता. १०
पितासुतायोपदिदेश मंत्रं रामात्मकं वंशपरं पराप्तम्
वागीश्वरीनामपतिव्रतायै हनूमतो मंत्रमनुग्रहेण. ११
तन्मंत्रपाठेन स मारुतिस्तु वागीश्वरीकल्पितपूजया च
प्रसन्नचेता बुभुजे मनोज्ञमन्नं बुभुक्षार्दितवत् प्रमोदात्. १२
श्रीरामचंद्रस्य च मारुतेश्च प्रसादतः सर्वसुखाभिवृद्धिः
अभून्नृसिंहः स तु भार्ययासौ रेमे श्रिया विष्णुरिवेशभक्तः. १३

॥ श्रीराममंत्रोपासनप्रभावान्नरसिंहमुनेः वाचादेव्यां मनोहरप्रभूत्पत्तिकथनम् ॥

दत्तोऽस्य वंशे भवतीति मत्वा नृसिंहदयां स तपोन्यतानीत्
तस्माद्रमासूतसुतं गुणाढ्यम् शुभेदिने सुग्रहचंद्रतारे. १४

मनोहरः सर्वगुणैः कुमारो रूपेण मारः सदृशः कुमारः
सत्संगधीरः कृतसद्विचारो रराज स ब्रह्मसुखैकचोरः. १५
अन्वर्थनामा स मनोहरोऽभूत् पक्षे वळक्षेऽनुदिनं शशीव.
वृद्धिं गतः सर्वसमृद्धिरूपः कल्याणपुर्यां वृषभात्तचर्याम्. १६
पतिव्रता सूतसुतं द्वितीयम् मार्तांडनामानममोघसत्त्वम्
इष्टातदानीं मुदमापतुस्तौ जायापती पुत्रजनिं परार्थ्ये. १७
पित्रोपनीतस्तदनुज्ञयासौ जितेंद्रियो राममनुं जजाप
तेनैव सर्वात्ममनोहरः श्रीमनोहरोऽभूत् स मनोहरश्च. १८
महाविरागः कृतपुण्यपूगः सुरेंद्रभोगः श्रितराजयोगः
गुणैरमोघो जितशात्रवौघः सोऽभून्नृसिंहार्जितधर्मभागः. १९


नृसिंहमुनिः स्वभार्यांप्रति हनूमन्मंत्र
मुपदिश्य स्वदेहत्यागकरणम्


भार्यां समाहूय नृसिंहनामा स्वस्यावसाने ससुतामवोचत्
अस्मिन् गृहे तिष्ठ धनादिकांक्षा तवास्तिचेत् सौख्यलवैर्विहीने. २०
गच्छाशु सद्धर्मयशोऽभिलाषस्तवास्तिचेन्मातृगृहं सपुत्रा
मनोहरं सन्महिमात्रिरूपे दत्तांशतः पुत्र उदेष्यतीह. २१
उक्त्वेत्थमारूढदृढयोगरीत्या जहावसून् ब्रह्मपथा जिताशः
तत्कर्मनिर्वर्त्य सुतेन साकं सालालसिद्धस्य पुरीं विवेश. २२


भर्त्राज्ञया वाचादेव्याः मनोहरमार्तांड-
चिम्णादेवियुतायाः लालसिद्धग्रामावासः


सा मारुतौ न्यस्तसमस्तभारानाचिंतयन्नन्दनभाविकार्यम्
क्रमादतीतोऽस्य विवाहकालस्तं तादृशं वीक्ष्य जनः शुशोच. २३
अतीततारुण्यवलायकौ वा कन्यामुमुष्मै गुणवित् प्रदेयात्
वागीश्वरीमुग्धधिया सुतार्थं संत्यक्तचिंतेति जना अवोचन्. २४

वागीश्वरीं मारुतिमेत्य मुग्धा विधाय पूजां सुवरं ययाचे
सूनोर्विवाहे च तदीयवंशवृद्धौ स्वनिर्याणपदस्य सिद्धौ. २५.
सद्वंशजा स्वत्पदिने कुमारी नैवा मुमेष्य त्यपि वंशवृद्धिः
व्रजाशु कल्याणपुरीमितस्त्वं मुक्तिस्त्वदंते भवि तेत्युवाच. २६.

### अप्पयनसूयांशजातयोर्मनोहरबयादेव्योर्विवाहप्रसक्तिः

अप्पाख्य भूदेवसुतानसूयां शतोबयाख्या जनि सुन्दरांगी
तज्जन्ममात्रेण पिता बभूव धनेन धान्यैः पशुभिः समृद्धः. २७
रेजे बयांबा गतमोहदंभा लावण्यरंभास्यजितेंदुबिंबा
गुणावलंबोष्ठजितोरुबिंबा मृदूरुरंभा दययापरांबा. २८
दृष्ट्वा स कन्यां सुगुणैकमन्या मप्पाभिधो चिंतयदात्मनीत्थम्
कुत्रास्ति? पुत्र्याः सदृशो वरोऽस्या कस्मै प्रदेया ?सुगुणा बयांबा. २९
समर्चयन्मारुतिमिष्टदेवं वरं ययाचे स मनोरथाप्त्यै
अदृश्य एवोच इमं हनूमानिष्टार्थसिद्धिर्भविता त वेति. ३०
विवाहयत्नं कुरु पुत्रिकाया इतोऽष्टमेह्नि त्वदगारमेव
प्राप्नोति धीमान् स्पृहणीयमूर्तिर्मनोहराख्यः सदृशो वरो स्याः ३१
अप्पाभिधस्तस्यगिरा विवाहवस्तूनि संगृह्य निजाप्तवर्गान्
आमंत्र्य पाणिग्रहणाहनि श्रीमनोहराप्तिं सुनिरीक्षतासौ. ३२
नागात् किमर्थं ? स वरः कुतस्त्यः ? पुत्रोऽथवा कस्य च ? कुत्रगेहम् ?
तन्नामधेयं वद मे तमाशु समानयेद्येति जनस्तमूचे. ३३
अहं नजाने मम तं हनूमा सूचे प्रसन्नः कुरुलग्नमद्य
वरः. समेष्यत्यचिरादितीह मार्गं निरीक्षेऽद्य मनोहरस्य. ३४
निन्दत्सु सर्वेषु मनोहरोऽथ समागतोऽभून्निजबंधुवर्गैः
भेरीमृदंगानकतूर्यघोषै रानर्च्यजामातरमप्पशर्मा. ३५

आनीयवैवाहिकमंटपं तं प्रक्षाळ्य पादौ सुगुणान्वितस्य
वरस्य पूजा मकरोत् सुगंधमाल्यांबरकल्पसुदक्षिणाभिः. ३६
शुभे मुहूर्ते स तु कूकुद्दाग्रणीः कन्यामलंकृत्य सुभूषणाद्यैः
वराय तस्मै सुमनोहराय प्रादात् सुतां भक्तिभरेण विप्रः. ३७
अप्याभिदस्तत्र मुदाद्विजेभ्यः कुटुंबवद्भ्यः कुलशीलवद्भ्यः
ददौ ससूपं सरसान्नमाज्यं गोभूसुवर्णांबरवाहनानि. ३८
वयासमेतः समनोहरस्तु स्वीकृत्य चाज्ञां श्वशुरस्य शीघ्रम्
ययौ सबंधुः सखयं सतीं तां श्रीलालसिद्धस्य पुरीं मनोज्ञम्. ३९
प्रियं सिषेवे दयया वयांबा शचीव चक्रं श्वशुरौ च भक्त्या
हितैषिणीभर्त्रुरभूत् तथा सा श्रीरामचंद्रस्य यथैव सीता. ४०
वागीश्वरी मारुतिमेत्य नित्यं समर्प्य नैवेद्यमखंडभक्त्या
रिक्तेन पात्रेण गृहं प्रयांतीं श्वश्रूं विलोक्याभिदधे वयांबा. ४१
कस्मै प्रदास्य? स्यनिशं त्वमार्ये! हनूमदर्थे परिकल्पितान्नम्
विचित्रमेतद्वद संशयं मे छिंदीति नाब्रूतवधूम् सती सा. ४२
छायेव सा श्वश्रनुगेव भूत्वा भक्त्या वयांबा हनुमंतमेत्य
फलानि रम्यापि निवेदितानि हनूमतालोकत खादितानि. ४३
प्रदक्षिणीकृत्य स विस्मियाचे श्वश्रूं समानीय करौ वयांबा
रहस्यमुत्थ्यापय मंत्रराजम् मह्यम् प्रकुर्वे हरिपूजनं च. ४४
उपादिशन्मारुतिमंत्रमार्या वयांबिकायै निकटे हरेश्च
ततः क्रमादारभतार्चितुं सा तुष्टश्चभक्त्या हरिराविरासीत्. ४५
गर्भे जनिष्ये तवभक्तितुष्टो वयांबिकेऽहं मदभिख्ययैव
प्राप्नोषि भर्त्रर्चनया द्वितीयमप्राकृतं पुत्रमनंतकीर्तिम्. ४६
असूतपुत्रं प्रथमं वयांबा हरेः प्रसादाद्धनुमंत माद्यम्
दिनेदिनेऽसौ ववृधे महौजाः सर्वेष्टकारी पितृमातृभक्तः. ४७

## श्रीरामतीर्थसमीपे मनोहरकृतश्रीरामनवम्युत्सवप्रकारः

मनोहरोऽगात् सहभार्ययासौ चैत्रे समाराधयितुं रमेशम्
श्रीलालसिद्धाश्रमनैरृती सत् तीर्थे मनोहारि महीरुहाढ्यम्. ४८
विधाय रंभाक्रमुकैर्मनोज्ञं सन्मंटपं पल्लवतोरणाढ्यम्
तत्रातसीमूलतलेऽर्चनार्थं फलाक्षतादीन् जगृहे पदार्थान्. ४९
संस्थाप्यरामं पुरतः सबंधुरपूपुजत् सद्द्विजराट् सभार्यः
परस्परं तत्र जनाः समायन् द्रष्टुं महं सर्वविनोदपात्रम्. ५०
संपूज्यरामं विधिवत् सविद्वान् रामायणं तत्पुरतो न्यपाठीत्
सन्तोष्य विप्रानथ दक्षिणाद्यै स्तस्थौ स्मरन् राममतुं मनोज्ञे. ५१



## पारणदिने सिद्धमुनिदत्तचूतफलभक्षणात् बयादेवीगर्भधारण वर्णनम्



तत्रागत. सिद्धमुनिर्जटावानाजानुबाहुः स्मितसुन्दरास्यः
रक्तांशुको भस्मविलिप्तगात्रो दण्डेन कुण्ड्याच लसत्कराब्जः. ५२
उत्थाय सर्वेऽपि सदस्य विप्रा यदृच्छया प्राप्तमुनिं प्रणम्य
आनर्चुरर्घ्यादिभिरादरेण मनोहरं स्वाग्रगतं विधाय. ५३
संसारिणां दुर्लभमत्र साधो! त्वद्दर्शनं पुण्यशतैरभून्नः
विशेषवार्तां वदकामपि त्वं मनोरथाप्तिर्महतां हि संगात्. ५४
इत्थं वदंतं तमुवाच सिद्ध स्तुष्टास्म्यहं त्वद्विहितार्चनेन
दान्ये फलं पुत्रनिदानमद्य तेनेष्टसिद्धिर्भविताचिरात्ते. ५५
सहाशिषं सिद्धमुनिः स दत्वा मनोहरायाम्रफलं मनोज्ञम्
अंतर्धधे सर्वजनेषु तत्र पश्यत्सु विस्मित्य महो! विशेषम्. ५६
मनोहरोऽथाद्भुतवार्धिमग्नः श्रीराम एवागतवान् तथापि
सिद्धाकृतिं सन्निहितं यतस्तं नावेदमस्मादहमेव मूर्खः. ५७
किं चित? यांतर्हितवस्तुतत्वे साक्षात्परोक्षेऽपि गतिः स एव

इत्थं समाधाय मनःकथं चिद्वयामुवाच स्मयमानवक्त्रः. ५८
सिद्धस्थले श्रीरघुनाथदत्तं फलं प्रिये! भुंक्ष्व तनूजहेतुम्
सिद्ध्यर्क्ष योगांचितवासरेऽस्मिन् सिद्ध्यत्यभीष्टं सकलं यतस्तत्. ५९
भर्त्तुः समाकर्ण्य वचो बयांबा फलं सुतोत्पत्तिकरं समासीत्
गर्भं स्वतेजस्तति नाशितारि दुर्भं दधे सर्वजनार्थ्यमानम्. ६०
मित्रं समाहूय मनोहरः सनाडिधमं सद्मनमध्यसंस्थः
प्रोचे विधायामलरौप्यपत्रं समानयानेन हितं तवस्यात्. ६१
तत्पत्रमध्ये स विलिख्य गर्भस्थितस्य दत्तस्य भविष्यदर्थम्
यन्नामपृच्छः किल लंबिकाख्यं रहस्यमस्मात् समुपैष्यसि त्वम्. ६२
उक्त्वेत्थमग्रे स मनोहरस्तु बबंधतत्तस्य करेऽथ यंत्रम्
वाणीपुरं गच्छ यथासुखं त्वं स्यादिष्टमेतेन तवेत्यवोचत्. ६३
प्रणम्य विप्रं प्रययौ जयाख्यः स स्वर्णकारी पुरमाशु वाण्याः
लब्ध्वा सुतान् तत्र बहूनि धान्य धनानि लेभे हरिवत् सुभोगैः. ६४
व्रतं समास्यात्र मनोहरस्तु ययौ स्वगेहं सहधर्मदारः
रामे परं न्यस्तसमस्तभारो विनायकाल जितषट् सपत्नयः. ६५
साधोः प्रसादाद्ववृधे स गर्भो दिने दिने शुक्लशशीव तस्याः
चक्रुर्द्विजाः पुंसवनं च काले सीमंतमिष्टाप्तसनाभिवर्गैः. ६६
पूर्णेऽथ मासे नवमे बयांबा प्रसूतिखेदं पृथुलं प्रपेदे
स्वर्गेऽभवत् दुन्दुभिवाद्यघोषस्तदासुमैर्वृष्टिरभूद्धरण्यां. ६७

**⇛ बयादेवीगर्भस्थप्रति गुप्तरूपैर्ब्रह्मादिभिः कृतप्रभृस्तुतिः ⇚**

शक्रादिदेवाः समुदो बयांबा गर्भस्थितं दत्तमनन्तमाद्यम्
करान् समानीय शिरस्सु सर्वे कांताकृतिं स्तोतुमुपक्रमंत. ६८

देवाः ऊचुः

मुक्तै सतां सर्वजगद्धिताय भूभारदूरीकरणाय शीघ्रम्

आगत्य नः पाहि दुस्तर्कवादैः संतापितान् मिथ्रजनैर्महात्मन्. ६९
युगे युगे धर्मसमर्थनाय जनिष्यसि त्वं विविधस्वरूपैः
श्रुत्यध्ववाह्याखिलदुर्मतानाम् नाशाय दुष्टासुरलक्षणानाम्. ७०
कल्किस्वरूपेण भविष्यसि त्वमंते कलेर्म्लेच्छविनाशनाय
त्रिशूलचर्मासिवरायुधेन तुरंगमारुह्य सुधर्मगुप्त्यै. ७१
अतस्त्वमाविर्भव देव! भूम्याम् संस्थापनायाखिलसन्मतानाम्
प्रसूतिवातार्त वयापि चेंडार्न्निर्गत्य नस्त्रातु ममोघवीर्य. ७२
अशेषदेवा जनि मर्धयंते कृपादृशा पश्य जगद्विपक्षम्
विलंबतः स्यादमृतं विषं यद्विलंबनार्हः किमसावनेहा. ७३

श्रीमाणिक्यप्रभोरवतारः

स्तुत्वा तमंतावदमर्त्ययूथः तन्मातरं वीक्ष्य वयं! शृणुष्व
तुंदाद्धि निर्गच्छति सुन्दराग्र्यस्त्रिमूर्तिरूपः पुरुषः पुराणः. ७४
मनोहरोऽत्रिस्त्वमिहानसूया प्राग्जन्मनि त्वत्पतिरेषु यत्रे
पुत्रं त्रिमूर्तीन्यदतस्तदात्मा पुत्रस्त इत्यंतरधादनूद्य. ७५
ततः सहोच्चच्छदभूततिथ्यां ब्राह्ममुहूर्ते स्थिररोहिणीभे
पंचग्रहेषूच्चगतेषु तेजः किंचित्तमोभेदकमाविरासीत्. ७६
मातावयाजातशिशुं प्रदीप्तम् श्रीवत्सपद्माक्षकपालमाल्यम्
वराभयोद्दण्डकमंडलूद्यच्छूलाक्षमालांकितबाहुकांडम्. ७७
किरीटसूष्णीषजटाशिरस्कं सुवर्णवल्काजिनदिव्यचेलम्
द्व्यष्टत्रिणेत्रं त्रिगुणैरतीतं त्रिमूर्तिरूपं समलोकताग्रे. ७८
स्वप्नोऽथवा मानसविभ्रमो वा यदद्भुताकारमपश्यमद्य
इत्थं विचिंत्यासकृदप्युदीक्ष्य सा निश्चिकायात्मसुतं हि इत्तम्. ७९
प्रतप्तचामीकरचारुदेहं इनेंदुकोटिद्युतिभासमानम्
पुनः पुनः सूनुममीलिताक्षी दृष्ट्वा वयाऽमुंचत हर्षजाश्रु. ८०

मनोहरः पुत्रजनिं निशम्य स्नानार्थमाशु प्रययौ स तीर्थम्
स्नात्वा सचेलं तटमागतस्सन् जले ददर्शाद्भुतकुंडलींद्रम्. ८२
रसातलादेत्य जले विहर्तु मनाः फणींद्रः किमिहागतोऽभूत्
इतिभ्रमं सो जनयत् समेषां स्वं पश्यतां तीर्थगतः फणींद्रः
फणीमणीदीपितदिक्तटं तं मनोहरोऽवोचद्थाभिवंद्य
दत्तांशजास्मत्सुतजन्मना त्वां गतावनीभारमवैमि शेष. ८३
मनोहरोक्तिं फणिराण्निशम्य शिरः प्रकंपच्छलतस्तदुक्तेः
प्रदर्श्य सत्यत्वमशेषलोकसतीर्गृहीत्वांतरधात् प्रहर्षात्. ८४
गत्वा गृहं विप्रवरानुमत्या पुण्याहमारादखिलाय मूलम्
विप्रांगनाशीभिरमोघवेदघोषैः समोदादकरोत् सभार्यः. ८५
दानानि सर्वाण्यकरोत् द्विजेभ्यो मनोहरः पुत्रजनौ प्रमोदात्
भेरीमृदंगानकतूर्यघोषा महानभूद्व्याप्य दिवं भुवं च. ८६
हृष्टा अभूवन्नखिलाः पयोभिर्नद्यश्च गावश्च ननंद लोकः
सर्वा धरित्री शुभसस्यपूर्णा रेजे सुते तस्य तु जातमात्रे. ८७
त्रिमूर्तिचिह्नैः समलंकृतं तं सौन्दर्यपूर्णं तनयं निरीक्ष्य
अंके समारोप्य पिताथ बालं मूर्धानमाघ्राय जगादचैवम्. ८८
स्तंभात् सदंभो नरकेसरीव शंभोर्जटाया इव वीरभद्रः
त्वं मामकांगादसि सद्धिताय दत्तांशतः पुत्र चिरं सुजीव. ८९
फालेऽब्जरेखाक्षिसुरक्तरेखाः करोत्रिशूलारिदरादिरेखाः
पादेऽब्जरेखापि गलेऽहिरेखास्तिस्रश्च यन्नांत्यत ईश्वरस्त्वं. ९०
बालस्य वृत्तं स भविष्यदुक्त्वा सतीहितार्था स मनोहरस्तु
प्रादात् शिशुं पूर्णसुधांशुभासं सत्यै सदानंदसमुद्रमग्नः. ९१
यन्नामार्णप्रकरघटितो मःपिशंगस्य वाची
स्यादाकारः सरसिजजनेर्णस्तुघोरस्य यस्मात्

इः शंसुं कः सितमभिदधात्यस्तु विष्णुं ततोऽयम्
दत्तः साक्षात् त्रिगुणविलसद्ब्रह्मरुद्राच्युतात्मा. ९२
जातं सुतं माणिकनामभाजं तातः स चक्रेऽखिलवंद्यवेत्ता
एकादशेऽह्नि द्विजवंधुवर्गैरकारितोन्मेष सलीलवालः. ९३
श्रीमाणिक्यप्रभुजनिकथां पावनीं मानवा यं
शृण्वंतीहादरभरवशान्निर्वृतिं ते लभंते
पुत्रप्रार्थी तनयमवनिं राज्यकामः सुयोगम्
योगाध्यारोग्यमपि स गदः सत्य माप्नोति नित्यम्. ९४

इतिश्रीब्रह्मण्डपुराणकथासारे, दत्तात्रेयजन्मपयःपारावारे,श्रीगुरु-
महिमावर्णनरत्नावल्यां, माणिक्यविजये, प्रथमभागे,
श्रीमाणिक्यप्रभोर्वंशानुवर्णनं प्रभो-
रवतारप्रभावकथनंनाम
दशमोऽध्यायः.



श्रीगुरु अवधूत!
श्रीसद्गुरु माणिक्यप्रभुमहाराजाय नमः!

# श्रीमाणिक्यविजयः

प्रथमभागः
एकादशोऽध्यायः

दीनः—
गुरुरेवगतिः सदा नृणां भवदुःखाब्धिनिमज्जतां मुने!

चरणात्ममनोज्ञनौकया पदलग्ना नखिलान् हि तारयंत्.
गुरुवृत्तसुधामहर्निशं प्रपिबंतं तृडमुं न बाधतं
भवदाननीरजाच्युतां क्षुदपि त्यक्तजलं च दुस्सहा. २
सकला वद विस्तरेण मे शुभलीला गुरुमाणिकस्य ताः
अतनोद्भुवि भक्तमोहनाः कति लीला मनुजाकृतिः स याः. ३
इति विश्वसितेन छेतसा प्रणतं दीनमुवाच वत्सलः
श्रुणु माणिकशैशवोत्थितं चरितं वच्मि यथा श्रुतं मुने ! ४

## श्रीप्रभोर्बाललीलावर्णनम्

ववृधे शिशु वेश्मनि श्रिया नृपमः शुक्लशशीव माणिकः
स्वगिरोपनिषद्गणःप्रथा ममता प्रत्यहमेव शित्यसौ. ५
सनिधत्सु रिवाङ्गमूर्धसु स्वपदाब्जे धरणीतले क्रमत्
समपस्य दिवात्मवज्जना "निह नानास्ति न किंच", नंत्यसौ. ६
कलभाषणतः शिशोः शुकागमनैर्हंससुखाविलज्जिताः
स्मितसुन्दरवक्त्रशोभया द्विजराजोवमतः कृशोऽभवत्. ७
मणिनूपुरकंकणांगदैः कटिसूत्रांचितकिंकिणीरवैः
स चचार मुदा गृहांगणे वयया दत्तकरः शुभंकरः. ८
पितरौ परिरभ्य बालकं मुमुदा ते रुचिरं मुहुर्मुहुः
क्षणवद्दिवसानि निन्यतुः परमानंदपदस्थयोगिवत्. ९
बुभुजेऽष्टममासि माणिकः पितृदत्तं विधितः सुधोदनम्
भजताममृतं ददामि मा मिहलोकेऽप्यशनं त्वितीव सः. १०
रजसा सवयस्कबालकैराजिरं रंत्त समुग्धवद्गुरुः
इह खेलति यो मयाधुना स परात्मनि खेलतीति किं? ११
व्यलिखन् निखिलाक्षराणि स प्रथमाब्देऽद्भुतमावहन्निव
न्यपठीत् त्रितये सुपुस्तकं सुक्रियाभाषत पंचमाब्दके. १२

रुचिरौदनमंब! देहि मे क्षुदिता", यंति सचेलमग्रहीत्
द्रुतमेत्य बया तु तंडुलानविलोक्यंषदपि द्रुतं जगौ. १३
तरसानयतिस्म तंडुलाः सहजस्ते सहतां भवान् क्षुदम्
भवदग्रत एव तंडुलानवलोके किल मा रुदः सुत. १४
अवकर्ण्य बयोक्तिमार्तिदां परिहर्तुं पितृदैन्यमादरात्
व्यतनोद्धसधान्यसंपदं तपसा तक्षणमेव माणिकः. १५
तदुदारतया सविस्मया तनयं देव ममस्त सा बया
दययावविमोहितां बयामशनायाच्छलतः प्रभो! त्वया. १६

श्रीप्रभुः स्वमातुर्बयादेव्याः जलस्थाल्यां ब्रह्मांडप्रदर्शनम्

स यया च जलं पिपासया जननीं जातु जगद्विमोहनः
अदिशत् तनयाय सा जलं विमलं गांगपयोवदादरात्. १७
परिगृह्य तदब्रवीत् सतां प्रतिभात्यत्र यदंब! तत् तु किं?
वचनं मम सत्यताश्रयं यदि संधेक्षि तदेतदीक्ष्यताम्. १८
इति पुत्रगिरा समीक्ष्य सा जलमध्ये सचराचरं जगत्
मतिमत्यवगत्य "तत्कृतं सुतमस्तौदतिविस्मयाकुला. १९

बयादेवीकृतश्रीमाणिक्यस्तोत्रम्

बयादेव्युवाच—

माणिक! मायामोहनमूर्ते! मामव पापामव्ययकीर्ते!
त्वामिह मन्ये निर्मलवृत्तम् भूमिगतं श्रीमन्मुनिदत्तम्. २०
तत्त्वमसीत्यादिश्रुतिबोध्यं सत्वमयं त्रैकालमबाध्यं
तत्त्वकदंबे कारणमाद्यम् सत्वमवेक्षे धीरसुवेद्यम्. २१
माधव वेधश्शंकररूपः साधुहृदंतर्ध्वांतसुदीपः
शाधिदयाळो शांतदशा मां साधय रम्यां मुक्तिकरीं माम्. २२
ओमिति यो वेदादिमवर्णः सत्वमिति प्रत्येमि वरेण्यः

नामविहीनं नादविलीनं नौम्यहमसञ्ज्ञाम्यनिधानम्. २३
शैशवलीलालोलमनस्कं कैशिकपालीव्याप्तरजस्कम्
मामकसूतुं त्वामिह दृष्ट्वा कामितमाप्नोमीशमयद्य. २४
तावकसेवापादितयुक्तिं देव दिशस्वानन्यगभक्तिम्
आदिश मे ज्ञानौपयिकोक्तिं मादिश गंधादिष्वनुरक्तिम्. २५
तारय संसारांबुधिलीनां धारय हस्ते मामतिदीनाम्
पूरय कारुण्यामृतदृष्ट्या धीर मयादृष्टोसि हि दिष्ट्या. २६
चिंतककारुण्यामृतपूरं शांतिगुणाधारं सुशरीरम्
सन्ततपूर्णानन्दविहारं स्वांत भज श्रीशांकुमारम्. २७
चंपकमालावृत्तमनोज्ञां संपदभिष्टार्थाष्टकसंज्ञां
यश्श्रयति श्रेयोर्थनयोर्व्यां स प्रथमः स्वः संसदि गुर्व्याम्. २८


श्रीप्रभोः फलसमर्पणात् फलविक्रयिण्याः सन्ततिप्राप्तिकथनम्


व्यतनोद्गुरुरात्ममायया शिशुलीलां प्रसुवः पुरः क्षणात्
सुतमेव विजानती परं परिरेमेऽमुमसौ मुदा वया. २९
फलविक्रयिकांतुजातुचित् स विलोक्य प्रसभं वचोऽब्रवीत्
तनयान् प्रदिसे यतावतः सति यावंतिफलानि मे दिशेः. ३०
इति तस्य वचो निशम्य सा दिशदस्मैफलपंचकं स्मयात्
क्रमशो लभताथ पंचसा ललितोक्तीं स्तदनुग्रहात् सुतान्. ३१


सर्पदष्टान् मृतस्य गोपकुमारस्य श्रीप्रभुपरतः प्राण धारणं तत्कृतस्तोत्रं च


स कदाचिदटन् मुदार्भकैरविशद्गोपगृहं यदृच्छया
हरिरित्यवगत्य तं पयोदिशदस्मै मधुरं तदंगना. ३२
भुवि गोपजनेषु संचरन् दधिदुग्धं मधुरं पिबन्नयम्

स्वचरित्रसुधां च पाययन् हरिवत्तान् प्रजगानतोषयत्. ३३
स निशम्य कदाचिदात्मनः सुहृदो गोपसुतस्य दुर्मतिम्
द्रयमानमनास्तदालयं द्रुतमाविश्य मृतं तमैक्षत. ३४
निजपाणितलेन संस्पृशन्नलमुत्तिष्ठ सखेति निद्रया
इति सत्वरमाजुहावतं स च निद्राण इमोत्थितस्त्वनात्. ३५

गोपकः—

चरितं किमु वच्मि ते प्रभो! म ह्लादास्त्वमसून् परालवे
अभयं प्रददौ यथा शिवो यमबद्धाय मृकंडुसूनवे. ३६
त्वदमेयदयामजानतः पशुवत्सं स्तुतिमेव जानतः
ममपाणितलं गृहाणभो भवसिंधौ पतितस्य माणिक! ३७
ममदुर्गुणसंततेश्च ते विमलानन्दमहागुणावलेः
अवधिर्न हि कोऽह? मल्पधीस्त्वमतः पाहि पदानतं च माम्. ३८
दिवि कल्पतरुर्यथा भवान् भजतामत्र मनोरथावहः
सुरधेनुरिवावनौ तथा त्वममून् रक्षसि वत्स! कल्पकान्. ३९
तृणवत्परिभूय निर्जरा भवदालंबभरात् समुद्धतम्
इह मुंचसि मां यदि प्रभो! कृतदारोदिमिहा निराश्रयः. ४०
न कृतांतदृगंतरक्तिमप्रसरो यावदसून् विकर्षति
अवतावदिमं नचेत् प्रभो! कृमृतोज्जीवनयत्नसार्थता. ४१
मधुरं तवनामसन्मधुप्रपतान् मन्मुखपंकजे प्रभो!
भुवि यद्भजनात् पुमान् सुधीरमृतं प्रेत्य भजत्यनुद्भवम्. ४२
मनसा वचसाभिवादये तवमूर्तिं भवजातिहानये
चरितं सुखदं श्रुणोमि ते मयिदीने कुरु देव! सत्कृपां. ४३
भुवि गोपकृतं गुरुस्तवं प्रयतः श्रीगुरुसन्निधौ पुमान्

प्रपठत्यनिशं श्रुणोति यः सपदं याति गुरोः सुखास्पदम्. ४४

इतिश्रीब्रह्मण्डपुराणकथासारं, दत्तात्रेयजन्मपयःपारावारं, श्रीगुरु-
महिमावर्णनरत्नावल्यां, माणिक्यविजये, प्रथमभागे,
दीनवत्सलसंवादे, श्रीगुरोर्बालुलीलावर्णनं,
गोपकुमारस्य प्राणदानन्ना
मैकादशोऽध्यायः.



श्रीगुरु अवधूत!
श्रीसद्गुरु माणिक्यप्रभुमहाराजाय नमः!

# श्रीमाणिक्यविजयः

प्रथमभागः

द्वादशोऽध्यायः

दीनः—

तापत्रयाग्नितप्तोऽहमाशाज्वालाभिपीडितः
गुरुवाग्बिंदुसंपूर्णैर्वर्षैरमृतपूरितैः. १
रक्षितोस्मि महारण्ये बंधुवृक्षसमन्विते
किमु वच्मि मनोनाथ! ते दयां मयि सर्वदा. २

अतः श्रीगुरुचारित्रं पुरतो वर्णयाधुना
बाल्यादारभ्य यत् कार्यमकरोन्माणिकप्रभुः ३

गुरुरूपैर्ब्रह्मादिभिः प्रपठितभक्तकार्यकल्पद्रुमादि मंत्रमालाप्रशंसा—तत्कृतप्रार्थना च

वत्सलः—

कदाचिन्माणिको दिव्यसिंहासनमधिष्ठितः
तदा ससंभ्रमाः सर्वे समाजग्मुर्महीसुराः. ४
वेदवादरताः केचित् तर्कशास्त्रार्थवादिनः
योगादिकर्मनिरताः सदा ब्रह्मविचारणाः. ५
सद्भक्तिज्ञाननिरताः सशिष्याः सहदारकाः
पुष्पाक्षतफलैर्धूपदीपैस्तांबूलदक्षिणैः. ६
खर्जूरैर्नारिकेळैश्च मधुरैः शर्करादिभिः
तत्र सिंहासनासीनं माणिक्यं गुरुमव्ययम्. ७
पूजयामासुरव्यग्राः पाद्यादिभिरतींद्रियम्
पुष्पांजलिं प्रकुर्वंतः सुनीराजनमग्रतः. ८
नर्तयंति च सेवार्थं स्तोत्रं कुर्वंति हर्षतः
इत्थं कोलाहलो जातस्तदानीं मुनिपुंगव! ९
तं देवं मन्यमानास्ते गुरोराज्ञामवाप्य च
तस्थुः प्रांजलयस्तत्र देवदेवस्य सम्मुखे. १०
नटकागायकावार मुख्यायुवतयस्तदा
वीणावेणुमृदंगाद्यैर्नर्तयंति च मुग्धवत्. ११
वन्दिमागधमुख्यस्ते श्लाघयंति प्रभोर्गुणान्
स्त्रीबालवृद्धसहिता दर्शनार्थं प्रभोर्मुने! १२
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव तथांत्यजाः

म्लेच्छाश्चान्ये च बहवः स्वस्वधर्मरतास्तदा. १३
समाजग्मुः फलादीनि गृहीत्वा भक्तिसंयुताः
सुममाल्यैः शर्कराद्यैः पूजयित्वा यथाविधि. १४
तत्रैव संस्थिताः सर्वे प्रभोराज्ञानुसारतः
तेषां मध्ये रराजासौ नक्षत्रैरिव चन्द्रमाः. १५
स्वर्गे यथाकल्पतरुस्तथैव भुवि माणिकः
यान् यान् कामान् समिच्छंति ये ये भक्तियुता जनाः. १६
तां स्तां यच्छति सर्वात्मा कामधेनुरिवावनौ
क्वचिद्गायति वीणादीननुसृत्य महाप्रभुः. १७
क्वचिच्छास्त्रविदैः प्राज्ञैः संवादयतिशंभुवत्
प्रदर्शयति योगांश्च योगज्ञानां क्वचिद्गुरुः. १८
संचरत्यनिशं ब्रह्मज्ञानिनां हृदि सर्वगः
सक्रीडत्यर्भकैः सार्धं क्वचिद्बिल्वफलादिभिः. १९
वरान् यच्छति सर्वत्र फलपुष्पाक्षतादिभिः
कांश्चद्दृष्ट्यानंदयति सुधासंपूर्णया गुरुः. २०
संभाषणालापनाद्यैः सन्तोषयति मानवान्
स सभाग्रे सर्वमतान् प्रस्थापयति वादतः. २१
सर्वं खल्विदं ब्रह्मेतीत्थं बोधयतीश्वरः
अणिमाद्यष्टसिद्धींश्च प्रदर्शयति सस्फुटम्. २२
भोगाननुभवत्येवं स्वर्गे शक्र इवावनौ
अजातशत्रुः सर्वेषां धर्मराज इव प्रभुः. २३
शास्ता समस्तधर्माणां वैवस्वत इवेश्वरः
वक्ता समस्तशास्त्राणां गुरुवद्गुरुराट् प्रभुः. २४
पालकः सर्वजगतां नारायण इवामलः

वेदवेदांगसंघानां तात्पर्यकथने गुरुः. २५
सदा ब्रह्मसमो भाति जगत्सृष्टिप्रवर्तकः
तपसा ब्रह्मचर्येण साक्षाद्रुद्र इवावनौ. २६
कोटिसूर्यप्रतीकाशः कोटिचंद्रसुशीतलः
कोट्यग्निसदृशो दीप्त्या ज्ञानिनां भाति तत्त्वतः. २७
नो वाचयति सर्वत्र ब्रह्मीभूत्वा स माणिकः
क्वचिद्दिगंबरस्तिष्ठत्यंगरागादिवर्जितः. २८
विदेहः क्रीडति सदा बालोन्मत्तपिशाचवत्
भस्मरुद्राक्षसंच्छन्नस्तारं चिंतयतीश्वरः. २९
संकल्पमात्रेण जनानुद्धारयति माणिकः
मद्गुरो दत्तदत्तेति श्रीदत्त सुरसत्तम. ३०
अवधूत चिंतनश्रीमद्दत्तदत्तेति सर्वदा
इत्थं वदति सर्वत्र मायामानुष्यवेषधृत्. ३१
लौकिकाननुसृत्यैवमकरोत् प्रभुमाणिकः
तं मेनिरे जनाः सर्वे दत्तं मानुषविग्रहम्. ३२
केचिदुन्मत्तमिति च केचिद्बालं सुनिर्मलम्
केचिद्ब्रह्मपरं साक्षादधिकारबलाज्जनाः. ३३
प्रभुमायासमाच्छन्नाः पुनः प्रांजलयो ब्रुवन्
भक्तकार्यसुकल्पद्रो! गुरुभूमंडलाधिप! ३४
श्रीमद्राजाधिराज! त्वं महाराज! सुयोगिनाम्
भुवनानांसदानंद! त्रयाणामद्वयात्मक! ३५
अभेद! नित्य! सर्वत्र निरंजन! सुनिर्गुण!
निरालंबा! ब्रह्मकीटपरिपूर्ण! सदोदित! ३६
भुवि सर्वमतस्थापकार्य! श्रीसद्गुरूत्तम!

श्रीमाणिकप्रभो! तेऽस्तु! जयो! जय! पुनर्जयः! ३७
इत्थं घोषः समजनि तदा सर्वमनोहरः
गुरुप्रेरणया सर्वे कृतार्थास्युः परंतप! ३८
तं दृष्ट्वा सुखमासीन मर्धोन्मीलितलोचनम्
साक्षाद्दत्तप्रभुं देवं मेनिरे गतसंशयाः. ३९
ब्रह्माद्या स्त्रिदशाः सर्वे विमानेषु सुसंस्थिताः
आजग्मुर्दिवि तं द्रष्टुं दत्ताख्यं माणिकप्रभुम्. ४०
भूभारहरणार्थाय जातं सर्वार्थदं नृणाम्.
मनोहरवयादेव्योरत्नसूयात्रिसंज्ञयोः.
उद्धर्तुं सकलान् जातं त्रिमूर्त्यात्मकमक्षरम्
कृत्वा वृष्टिं सुमैर्देवं स्तोतुं ब्रह्म प्रचक्रमे. ४२
जातः स्वस्थमनाः स्वयं क्षितितले दत्तः सुरैः प्रार्थितः
पापान् तारयितुं सतां निगदितुं ब्रह्माद्वयं माणिक
आगच्छाखिलकार्यजालमवनौ निर्वर्त्यते सत्कलाम्
संस्थाप्याखिलकामनार्थमतुलां भाव्यर्थमद्यार्थये. ४३
मा तिष्ठ स्वगृहे प्रयोजनसिदं स्वस्यावतारात्मकं
कुर्वाश्वीश्वर संचरन् क्षितितले सर्वत्रशिष्यैर्वृतः
श्रीमल्लारिसमीपगे मणिगिरौ सिंधुद्वये संगमे
शुद्धे माणिकयोगिवर्य निवसन्नप्राकृतं दर्शय. ४४
कृत्वा स्तोत्रमजः प्रभोः सद्गुरुणाज्ञप्तः सुरैर्वंदितः
स्वंधाम प्रययौ महोत्सवभरैः सम्मोदयन् भूतलम्
तद्वाक्याद्गुरुरैच्छदत्र भुवने कर्तुं कृतार्थान् जनान्
संचारं परमादरात् गुणनिधिः श्रीमाणिकेंद्रप्रभुः. ४५
इममध्यायमखिलं प्रत्यहं नियतः शुचिः

यः पठेद्भक्तिसंयुक्तः मुक्तिस्तस्य करस्थिता. ४८

इतिश्रीब्रह्माण्डपुराणकथासारे, दत्तात्रेयजन्मपयःपारावारे, श्रीगुरुमहिमावर्णनरत्नावल्यां, माणिक्यविजये, प्रथमभागे, दीनवत्सलसंवादे, श्रीगुरोर्भक्तकार्यकल्पद्रुमादिबिरुदावळिकथनं, ब्रह्मादिप्रार्थनया श्रीगुरोः संचारकरणे मनीषावर्णन नाम द्वादशोऽध्यायः.



श्रीगुरु अवधूत!

श्रीसद्गुरु माणिक्यप्रभुमहाराजाय नमः!

# श्रीमाणिक्यविजयः

प्रथमभागः

त्रयोदशोऽध्यायः

वत्सलः—

अथान्यत् संप्रवक्ष्यामि माणिक्यस्य शुभोद्यम १

चारित्रं सर्वपापघ्नम् भुक्तिमुक्तिविवर्धनम्.



## श्रीप्रभोर्दयावशाद्दरिद्रद्विजस्य दारिद्र्य निवृत्तिः—गुहायां निधिप्रदर्शनम्



कदाचिच्छुभपर्यंके निविष्टे माणिकप्रभौ
दरिद्रोऽगाद्ब्राह्मणस्तु कुटुम्बी दुःखकर्शितः. २
दीर्घदण्डं पतित्वाग्रे त्राहित्राहीति मां पुनः
शुचाब्रवीदश्रुपूर्णाकुलचित्तेन माणिकम्. ३

ब्राह्मणः—

निस्वोऽहं जन्मनारभ्य क्षुत्क्षामपरिपीडितः
पुत्राश्च बहवः सन्ति बन्धुवर्गा मम प्रभो! ४
यवागूरपि नास्त्येव तेषां क्षुच्छांतये गुरो!
किमस्ति? मम वक्तव्यं पापं दारिद्र्यसंभवम्. ५
अतस्त्वं संकटात् त्राहि त्वां विना नास्ति रक्षकः
शरणं यामि भगवन्! शरणागतवत्सल! ६
इत्युक्तस्तं गुरुः प्राह भक्तकल्पद्रुमो द्विजम्
मारोदीस्त्वं क्षणं तिष्ठ दान्ये तवमनोगतम्. ७
याहि मत्पृष्ठतोऽरण्यं निर्भयो मामनुस्मरन्
त्वदिच्छापूर्णतां यातीत्युक्त्वा वनमुपाययौ. ८
रामतीर्थसमीपे तु स्थित्वा श्रीगुरुमाणिकः
लक्ष्मीं संप्रार्थयामास द्विजप्रीत्यै परंतप! ९

श्रीगुरुः—

अस्मै देहि धनं द्विजाय भवतीं संप्रार्थयामि स्फुटम्
दारिद्र्याय कुटुम्बिने तवकृपापात्राय लोकेश्वरि! १०

सम्माज्र्यांस्त्र लिपिं पितामहकृतां दारिद्र्यदुःखास्पदां
गेहे तिष्ठ तदीयके वरमिदं याचे रमे! संततम्. ११
स्तुत्वेत्थं विररामासौ जगतां गुरुरव्ययः
य इदं शृणु ते नित्यं श्रद्धाभक्तिसमन्वितः. १२
तस्मिन् गृहं नर्तयति लक्ष्मीः संपत्समृद्धिदा
अशृणोत् तत्कृतां दिव्यां स्तुतिं लक्ष्म्या द्विजोत्तमः १३
प्रणाममकरोत् तत्र माणिक्यस्य पदांबुजम्
दर्शयामास विपिने निधिं विप्राय माणिकः. १४
गुहायां सिद्धसेव्यायां दृष्ट्वा विप्रो निधिं तदा
प्रहर्षमतुलं लेभे लक्ष्मीसंदर्शनाद्यथा. १५
द्विजस्तु धनमादाय गुरुम् नत्वा पुनः पुनः
ययौ स निलयं हृष्टः क्षुधिताय यथामृतम्. १६
किमलभ्यं? भगवतिप्रसन्ने गुरुमाणिके
अतः सर्वार्थसिद्धिस्याद्गुरुवर्यप्रसादतः. १७
ततोऽगात् स्वगृहं दत्त सविप्रनिचयैर्वृतः
श्रुत्वा तदद्भुतां वार्तां परिव्राड्जनास्तदा १८
'मम देहि धनं देहि म,' मेति प्रवदन् मुदा
तेषामदाद्बहुद्रव्यमर्थिनां मुनिपुङ्गव! १९
'अयं दत्तो दत्त', इति 'नः कृते भुवमागतः',
इति तं संवदंति स्म सर्वदेशस्थिता जनाः २०
मनोहरस्तु पुत्रस्य प्रभावं प्रत्यहं नवम्
दृष्ट्वा दत्तप्रभुं मेने वसुदेवो हरिं यथा. २१
संस्मरन् पूर्ववृत्तांतं मुनिना यदुदीरितम्

वयया सहितः कालं यापयामास भक्तितः. २२

## हनूमत्प्रभोरुपनयनकथाप्रसक्तिः

हनूमतो गुरोर्भ्रातुर्व्रतं कर्तुं शुभे दिने
संभारांश्च समीकृत्य बंधुवर्गैः समन्वितः. २३
उपादिदेश गायत्रीं व्रतं कृत्वा हनूमते
मनोहरो मारुतयं यथा रामश्च स्वं मनुम्. २४
तदा रेजे मंत्रदीप्त्या हनूमानिव भानुमान्
ब्राह्मणान् भोजयामास चतुर्भिर्दिवसैर्मुदा. २५
दक्षिणादिभिरुत्साहैर्गीतवादित्रमंगळैः

## मार्तांडमारुत्योर्देवालयनिर्माणं— तन्मूर्तिप्रतिष्ठापनं च

तदानीं माणिकः प्राह पितरं मधुराक्षरैः. २६
कुलदेवः सदास्माकं मार्तांडो माळसापतिः
स्थापितव्योऽत्र भवता गोत्रवृद्ध्यै गृहांतिके. २७
वाग्देवताभनोभीष्टं तव मातुः सदा गुरो
हनूमान् [illegible] धान्यत्ति [illegible] ममाग्रजः. २८
ते मत्[illegible] पूनर्धाय [illegible]
त्वत्तिनेव नाम्ना विख्यातस्तस्माज्जातः प्रियंवदः
अतः संस्थापयात्र त्वमावयोर्देवयोर्गुरो. २९
हनूमान् मार्तांडयोश्च भूसुरैश्च यथाविधि
तद्वाक्यात् प्रीतिसंयुक्ते देवायतनमुत्तमम्. ३०
कारयामास शिल्पज्ञैः सुमनोहरवस्तुभिः
वयया सहितः श्रीमच्छुभेलग्ने महोत्सवैः. ३१
स्थापयामास विधिवन्मार्तांडं मारुतिमुदा

सेवां कुर्वंति सततं सर्वे तं भक्तिसंयुताः. ३२
मनोहरस्तु तत्रैव योगाभ्यासं करोति हि
हनूमान् गृहकार्याणि मातुराज्ञानुसारतः. ३३



### श्रीरामभक्तस्य हृदयरामलालस्य मनोहरस्वरूप निदर्शनं—मनोहरकृत हृदयरामलालस्य श्रीराममंत्रयोगाद्युपदेशक्रमः



कदाचिन्द्राग्यनगरं धनवान् विप्रपुङ्गवः
योगाभ्यासी तु हृदयरामलाल इति स्मृतः. ३४
चिंतयामास हृदये गुरुः कोऽस्ति? जगत्रये
ममत्वसंशयच्छेत्ता योगदातामृतप्रदः. ३५
कालोऽतीतो ममात्यंतं राम एव परागतिः
इति व्याकुलचित्तस्सन् मध्याह्ने बहिरागमत्. ३६
तदानीं दृष्टवानत्र मनोहरनिभं नरम्
योगाभ्यासरतं दांतं भूतिभूषितविग्रहम्. ३७
अभिवंद्य मुदा पादौ प्रक्षाल्यार्घ्यादिभिः क्रमात्
निवेशयित्वासने तं कुशलं पृष्टवान् शुचिः. ३८
धन्योस्मि कृतकृत्योस्मि भवतो दर्शनादहम्
कुत्रावासः? किमस्तीह कार्यं? ते नाम किं? वद. ३९
लालसिद्धग्राममध्ये मनोहर इति स्मृतः
यदृच्छया गतोस्म्यत्र न किंचित् कार्यमस्ति हि. ४०
विप्रस्यागमनं स्मृत्वा राम एव न संशयः
इति मत्वाह विनयास्सद्गुरुस्तु त्वमेव हि. ४१
उपदेशं कुरु मम योगादीनां यथाक्रमम्

त्वदन्यः संशयच्छेत्ता नास्त्यतः स्वयमागतः. ४२
इत्युक्तस्तं मुदा प्राज्ञं मनोहरनिभः परः
उपादिशत् स योगं च रहस्यं गतसंशयम्. ४३
पूजयामास हृदयरामलालो मनोहरम्
भोजनार्थं समाहूय गतवानंतिकं गृहम्. ४४
क्षणादंतर्दधे देवो मनोहरसुवेषधृत्
आगत्य तरसा विप्रे गुरुमन्वेषयन् शुचा. ४५
विस्मितोऽभूदद्दृष्ट्वैनं क्वगतो? गुरुरित्यसौ
नूनं रामः स एवाद्य प्रसन्नो मनुजाकृतिः. ४६
उपदिश्य रहस्यं मे मनोहरसुनामधृक्
इति निश्चित्य मनसा रामलालो धृतव्रतः. ४७
गुरुमन्वेषयामास गतागतजनैः सदा
लालसिद्धपुरे ब्रह्मन् सकुटुंबं मनोहरम्. ४८
ज्ञातयस्तरसा निन्युः कल्याणनगरं मुदा
अत्रावासं कुरु सदा तव सौख्यं भविष्यति. ४९
इत्युक्तस्तैर्मुदा चक्रे वासं तस्मिन् मनोहरः
सोमेश्वरस्य निकटे निलये सुतसंयुतः. ५०
दर्शनार्थं समायांति माणिक्स्य जना मुदा
अयं दत्तप्रभुरिति संवदंति परस्परम्. ५१


कल्याणपुर्यां हृदयरामलालकृत
मनोहरवराष्टकस्तुतिः


क्वचित् काले रामलालो गुरुमन्वेषयन् क्रमात्

कल्याणनगरं प्राप्य ददर्श स्वमनोगतम्. ५२
प्रागदृष्टमुपदेष्टारं मनोहरमनामयम्
बन्धुवर्गैर्युतमपि मेने राममनानुषम्. ५३
साष्टांगं प्रणिपत्याग्रे शिष्योऽहमिति तापस!
हर्षगद्गदया वाचा स्तोतुं समुपचक्रमे. ५४

हृदयराम:—

श्रीमन्मनोब्जनिलयाय बयाधवाय
योगाय योगमहिताय सदाश्रयाय
अव्यंशजाय बवबन्धविमोचनाय
तुभ्यं नमोऽस्तु वरदाय मनोहराय. ५५
वेदात्मकाय परवस्तुसुचितकाय
वेदांतबोधलसिताथ सदाद्वयाय
सच्चिन्मयाय भक्तबन्धविमोचनाय ५६
तुभ्यं नमोऽस्तु वरदाय मनोहराय.
रामाय रामवरमंत्रसुबोधकाय
श्रीराजयोगिगणपूजितपदद्वयाय
रम्याश्रयाय भवबन्धविमोचकाय ५७
तुभ्यं नमोऽस्तु वरदाय मनोहराय.
पुण्याय पुण्यपुरुषार्थितविग्रहाय
मत्पुण्यराशिनिलयाय परंतपाय
पूतात्मने च भवबन्धविमोचकाय ५८
तुभ्यं नमोऽस्तु वरदाय मनोहराय.
तापत्रयोरुगहनाग्निनिभाय दग्ध
पापाय भाग्यनिधयं पुरुषोत्तमाय

प्रज्ञान्विताय भवबन्धविमोचकाय
तुभ्यं नमोऽस्तु वरदाय मनोहराय. ५९
भक्तेष्टदाय भवसागरतारकाय
भव्याय भर्गहरिधातृसुराश्रयाय
भूतात्मकाय भवबन्धविमोचकाय
तुभ्यं नमोऽस्तु वरदाय मनोहराय. ६०
रागादिदोषरहिताय निरञ्जनाय
वैराग्यशांतिनिलयाय जगन्मयाय
श्रीनारसिंहतनयाय गुरूत्तमाय
तुभ्यं नमोऽस्तु वरदाय मनोहराय. ६१
वाग्देवतानयनसत्सुखविग्रहाय
लीलात्तबाल्यवपुषेऽत्रिसदंशजाय
मां पाहि संसृतिभयात् तवकिंकरोऽस्मि
दासोऽस्मि देशिकमहान् शतशो नमोऽस्तु! ६२
स्तोत्रमेतत् पठेद्यस्तु मनोहरवराष्टकम्
क्षणान्निर्धूय दुरितात् कैवल्यं लभते ध्रुवम्. ६३
इत्यभिष्टूयपुरतः स्थितं हर्षपरिप्लुतम्
शिष्यं वैराग्यरसिकं ज्ञात्वा प्राह मनोहरः. ६४

मनोहरः—

धन्योसि त्वं यतो रामे दृढभक्तिरलौकिकी
अनेन बन्धमोक्षस्ते भविष्यति न संशयः. ६५
राम एवगुरुः साक्षात् सर्ववस्तुप्रदर्शकः
गुर्वात्मदेवताबुद्धिर्यस्याभूत् स तरिष्यति. ६६
स्मृतिर्मे सर्वदा पूर्णा सर्वदास्यादचञ्चला

ब्रह्मीभूया न याचान्ते राममेव गमिष्यसि. ६७
अस्मिन् गृहे त्वं स्वीकृत्य प्रसादं गच्छ सुव्रत!
सेवनीयं गुरोर्दत्तप्रसादं चरणोदकम्. ६८
तच्छ्रुत्वा रामलालस्तु तथा चक्रे गुरूदितम्
आज्ञापयामास वयां पाकार्थं स मनोहरः. ६९

## हृदयरामलालकृतमनोहरस्य सर्वस्वसमर्पणम्

विज्ञातुं तन्मनश्शुद्धिं माणिक्यप्रभुरव्ययः
दारिद्र्यम् दर्शयामास रामलालस्य तत्क्षणे. ७०
सा गत्वा यावनाळस्य भक्ष्यं चक्रे वया शुचा
श्रीमतं रामलालस्य कथं देयमिदं त्विति. ७१
तद्भुक्त्वासौ मुदा चक्रे भोजनं गुरुसन्निधौ
किमलभ्यं? गुरौ तुष्टे दर्शितं मम सङ्कटम्. ७२
दुःखोदर्केन भाग्येन नास्तिकिंचित् प्रयोजनम्
दान्यंऽस्मै द्रव्यनिचयमतिथीनां हि तुष्टये. ७३
आत्मदारसुतादीनामर्पणं गुरवे मुदा
शास्त्रसिद्धं तथैवाहमर्पयेति स बुद्धिमान्. ७४
कुटुम्बं पोषयामास गुरोरनिशमादरात्
किंचिन्न्यूनं स भवति यथासावकरोत् तथा. ७५
सर्वभारं परं न्यस्य मनोहरगुरौ शुचिः
यापयामास तं कालं रामलालः सुखान्वितः. ७६
मनोहरो दिव्यतपस्समाधिना सन्त्यक्तदुष्टाशयकश्मलः सदा

सपुत्रवर्गैर्जितषड्गुणौघः कल्याणपुर्यां न्यवसत् सुखं मुने!

इतिश्रीब्रह्माण्डपुराणकथासारे, दत्तात्रेयजन्मपयःपारावारे, श्रीगुरु महिमावर्णनरत्नावल्यां, माणिक्यविजये, प्रथमभागे, मनोहरस्य कल्याणपुरं प्रतिगमनं, हृदयरामलालस्यानुग्रहकरणं नामत्रयोदशोऽध्यायः



श्रीगुरु अवधूत!

श्रीसद्गुरु माणिक्यप्रभुमहाराजाय नमः!

# श्रीमाणिक्यविजयः

प्रथमभागः

चतुर्दशोऽध्यायः.

वत्सलः—

ततः कल्याणनगरं माणिक्यः पितृसन्निधौ
रराज सर्वसम्मोदगुणः परमसुन्दरः १
वितरन् सकलेष्टार्थानतिथीनां यथेच्छया
कामधेनुरिवावन्यां दर्शनात् तनुते शुभम्. २



वाचादेवी पतिस्मरणात् संप्राप्त सौभाग्यद्रव्यैः

सह वैकुण्ठलोकगमनवर्णनम्



अपूपुजन्मारुतिसिष्टदेवं वाग्देवता भक्तिसमन्विता सा
आवाहनाद्यैरुपचारगर्भै रिष्टार्थसिद्ध्यै परमात्मरूपम्. ३
स्वच्छन्दमृत्युं मम देहि वीर पत्युर्मुखं दर्शयतर्हि शीघ्रम्
साकं गमिष्ये पतिलोकमुच्चैस्तेनैव पत्यामपुनर्भवंतम्. ४
तथाऽस्त्विति प्रेमगिरा च मारुते स्नात्वा हतं संपरिधाय साध्वी
विभूतिरुद्राक्षयुता शुचिस्मिता पद्मासनस्थाऽथ बभूव वाचा. ५
प्राणान् समाकृष्य सुरेचकादिभिर्मनोऽनिलं संप्रविलाप्य रंध्रे
समाधिना भर्तृमुखं निरीक्ष्य सा संभाष्यतेनैव तदाज्ञयासौ. ६
जहावसून् ब्रह्मपदा जिताशा विमानयाने सहरैः सुपार्षदैः
सागीयमाना समवाप पत्या वैकुण्ठमप्राकृतमच्युतं च. ७
मनोहरोऽथ तं दृष्ट्वा मातुर्देहं स्वलंकृतम्
हरिद्राकुंकुमद्रव्यैर्मांगल्यादिभिरन्वितम्. ८
आश्चर्यं परमं लेभे स्वजनैः परिवारितः
इयं धन्मा पुण्यतमा साध्वी नित्यसुवासिनी. ९
पत्यासाकं गता लोकं वैकुण्ठमपुनर्भवम्
मत्वाऽथ चक्रे जननी प्रीत्यै संस्कारमादरात्. १०
निर्वर्त्य मखिलं कर्म ब्राह्मणान् भोजयन् सुधीः
तोषयामास बहुभिर्दक्षिणादिभिरादरात्. ११
अयं धन्यतमो वंशो यत्रास्ते गुरुमारुतिः
साधुसाध्विति तं देवं प्रशंसन्मुदा जनाः. १२

वाग्देवतायाः प्रस्थानं सर्वेषां मङ्गळावहम्
स्त्रीयो वा पुरुषाः श्रुत्वा यांति ते परमं शुभम्. १३



सकलविभवयुक्तस्य माणिक्यप्रभुदर्शनार्थं मागत्य सिद्धरूपो ब्रह्म 'तवानुजाः सेवार्थं भवा', मो ति प्रभुंप्रति प्रार्थना



ततः कदाचित् स गुरुरटव्यां सञ्चरन्मुदा
गन्धर्वगानमकरोत् सर्वानन्दकरं महत्. १४
पशुपक्षिमृगास्तस्य निकटे सञ्चरन्ति हि
पीत्वा गानानन्दरसं जितक्षुत्तृड्भयाकुलाः. १५
नरा नार्यश्च विवशा श्रुण्वंति मधुरध्वनिम्
सेवयंत्यनिशं मत्वा कृष्णं लीलातनुं मुनं! १६
तैर्युक्तो विचचारासौ त्रिपुरांतक भूधरं
क्वचिद्गुहायां विशति क्वचित् तिष्ठति सानुषु, १७
क्वचित् क्रीडति सर्वत्र मूकवज्जडवत् सुखी
स्वच्छंदं क च निद्राति तरुच्छायासु माणिकः. १८
क्वचिद्ददाति पुरुषानिष्टार्थान् भुवि दुर्लभान्
एवं क्रीडयतस्तस्य गिरिकंदरसानुषु. १९
अगाद्विमलसिद्धस्तु समीपं सद्गुरोर्मुनिः
जटावानुसरात साक्षात् परमेष्ठीव तापसः. २०
माणिक्यं सद्गुरुम् मत्वा दत्तांशं प्रणनाम ह
पुनरुत्थाय स मुनिः प्रार्थयामासचादरात्. २१

सिद्धः—

तवच्चरणयुगं मे हृत्सरोजे स्थिरं स्या

न्मयि कुरु करुणार्द्रां दृष्टिवृष्टिः सदास्तु
भवभयहरनामाहर्निशं मन्मुखेऽस्तु २२
प्रकटितनरमूर्तौ वीक्षणं याच यदमः
निगमततिभिराद्यं ह्यद्वचोभिः सुरेन्द्रै
निगदितुमजमुख्यैर्देवमार्त्यैरगम्यम्
कथमहमति मर्त्यं वर्णये त्वातिमूढ
स्तवपरमदयायाः पात्रभूतं हि रक्ष २३
निजविभवसमूहे रक्षणार्थं त्रिलोक्याः
हरिमिह भगवंतं त्वां विजाने वनिस्थम्
यदुदरकमलेऽहं सृष्टिकाले त्वदाशा
कृतसकलनिसर्गस्त्वं नमामीशजातः २४
भवजनिमपहर्तुं सज्जनानां विबोद्धुम्
ह्यभवदमृतमार्गे माणिकाख्योऽवतारः
सकलविभवजालैः सङ्कुरोषीह धन्यान् २५
स्तवपदशरणैकान् सञ्चरन् योगिवर्य !
भुवनमिह चरित्वा देवगंतासि हित्वा
स्वतनुमजनुतानां मुक्तिसिद्ध्यै स्वधाम
तत इह मणिपुर्यां संविशन् सेवयं त्वां २६
निगमविदितमार्गैरुत्सवैर्विप्रवृन्दैः
त्वमिह गुरुमहत्वं देहि मत्सन्तते श्री
चरणयुगपरागात् प्राप्तसर्वार्थसिद्धेः
गुरुवरतवपीठन्यस्तसर्वस्वभारः २७
प्रचरतु भुवि वंशः प्रार्थयेतुं वरं तः
जनुषि न कृतमाद्ये सेवनं त्वत्पदोः श्री

करवरदकरोमि स्वीकुरुत्वासिहापि
सुत इव तवदास्ये मां गृहाणाधुना त्वम्
क्षणमपि न सहेदं जीवनं त्वां विनार्य. २८
इति विलपितमग्रे कञ्जजं प्राह योगी
तवमनसि यदिष्टं तत्करोम्यन्तकाले
अहमपि चिरकालं ब्रह्मचर्यं गृहीत्वा
भुविखलु विचरेन्त्यां मनुजः सम्भवत्वम्. २९
गुरुगिरमनुसृत्य श्रीपदं वन्दयित्वा
निरगमदथ वेधाः सिद्धरूपी गिरीन्द्रम्. ३०
ददृशुरखिलदेवा भूसुरास्तद्धिचित्रम्
हरिहरविधिरूपं मेनिरं माणिकेंद्रम्. ३१
तदा सर्वजनैः सार्थं माणिक्यो गृहमाविशत्
सिंहासने महायोगी रराजद्विजराजवत् ३२
परंचुरुदयं स्नात्वा मनोहरपतिं बया
सम्पूज्य विधिवत् साध्वी माणिक्यमनुमोद्य च. ३३
गृहकार्याणि सर्वाणि कर्तुं तस्याज्ञया ययौ



सिद्धस्य भोजनार्थं बयादेव्या कृतामंत्रणम्—
भोजनानंतरं संतत्यर्थं बयादेव्या फलसमर्पणम्—
तत्प्रभावतो नरसिहमहाप्रभुजननम्.



सिद्धरूपी विधाताऽगात् प्रभुवर्यांतिकं मुदा. ३४
तप्तस्वर्णनिभः श्रीमज्जटावान् सितसुन्दरः
आजानुबाहुः सुतपा भस्मरुद्राक्षभूषणः. ३५
काषायवसनो दण्डी कमण्डलुविराजितः

कक्षन्यस्तत्व्याघ्रचर्मा साक्षाद्रुद्र इवामलः. ३६
तं दृष्ट्वा माणिकस्तूष्णीं निद्रालुरिव मायया ३७
पर्यंके मीलिताक्षोऽभूत् क्षणं सर्वज्ञ ईश्वरः.
मनोहरस्तु तं दृष्ट्वा द्रुतमुत्थाय सम्भ्रमात् ३८
पाद्यादीनुपकल्प्याग्रे स्वागतं पृष्टवान् रहः.
कस्मादागमनं? देव! कुत्रावासः? शुभोदयः ३९
त्वद्दर्शनात् कृतार्थोऽहं पवित्रं समभूद्गृहम्.
त्वद्वृत्तमखिलं ब्रूहि श्रोतॄणां तृप्तये मुने! ४०
मनोहरवचः श्रुत्वा प्राह सिद्धः परार्थवित्.

सिद्धः—

ब्रह्मावर्तादागतोऽस्मि प्रभुदर्शनलालसः ४१
सिद्धनामा मुनिरहं सर्वसङ्गविवर्जितः.
विचरामि महीमेतां दर्शनार्थं महात्मनाम् ४२
त्वक्षेत्रदर्शनादस्मि धन्योऽहमपि न्यायतः.
इत्युक्तस्तं द्विजं प्राह विनयात् स मनोहरः

मनोहरः— ४३

आतिथ्यं स्वीकुरु ब्रह्मन्! सिद्धपाकमभूदिह.
तच्छ्रुत्वा सिद्धपुरुषः स्नानार्थं प्रययौ मुनिः ४४
जलमध्ये समाधिस्थो बभूव विगतस्मृतिः.
सायंकालमभूत् तत्र नागतो द्विजसत्तमः ४५
तमनागतमाज्ञाय चिंतया स मनोहरः.
उपोषितो दयायुक्तः माणिक्यं समुपागतः ४६
शयने सर्वभागाढ्ये निद्रालुमिव संस्थितम्.
प्राह प्रसन्नहृदयो माणिक्यं स मनोहरः

विदितोसि भवान् सर्वं मत्कृतं कार्यमादितः. ४८
आमंत्रितो मया सिद्धः पात्रस्थापि नागतः
कथा तत्तस्य सर्पनिर्नाशाता किं करोमि भो? ४९
इत्युक्तो जनके नाथ सर्वज्ञः सकलेष्टदः
मह्यम् देह्यन्नमधुना क्षुदिताय न संशयः. ४९
ततो वच्मि ब्राह्मणस्य वृत्तांतं सर्वमादितः
श्रुत्वा वाक्यं प्रभोर्भीत्या ब्राह्मणो नागतोऽधुना. ५०
कथमन्नम् प्रदान्येस्मै द्रोहं विप्रावमानतः
इति मत्वा गुरोःशिक्यमदान्दत्तथा बया तदा ५१
माणिक्यो भोजनं कृत्वा सुखापशयने मुदा
पुनरागत्य जननी प्राह माणिक्यमंतिके.. ५२

बया

किं करोमि? महाप्राज्ञ! नागतो द्विजपुङ्गवः
तं विना भोजनं कर्तुमस्माकं नोचितं गुरो! ५३
कुरुध्वं भोजनं यूयं बंधुभिः सहिता मुदा
यदा यास्यति सोविप्रस्तं प्रत्यन्नम् प्रदीयताम्. ५४
श्रुत्वापि वाक्यं जननी विश्वासं नाकरोद्गुरोः
तदानीमागतः सिद्धः कृत्वा भोजनमुत्तमम्. ५५
समागतं स विज्ञाय भोजनार्थं मनोहरः
प्रार्थयामास ब्रह्मर्षिं विनयाद्भयया युतः. ५६
तच्छ्रुत्वाह द्विजश्चित्रं तववाक्यं मनोहरः!
सोमेश्वरस्य निकटे यूयमागत्य भक्तितः. ५७
मां पूजयित्वाविधिवदन्नं पीयूषसन्निभम्
दत्वासोपस्करं मृष्टं मह्यम् त्वं गुरुणा सह. ५८

४७ आगतासि महाप्राज्ञ! किमर्थं मां विहास्यसि!
तुष्टोऽस्मि त्वत्प्रसादेन सत्याः सत्यव्रतेन च. ५९
४८ तस्मान्मत्सदृशः पुत्रो भविता नीतिकोविदः
माणिक्यस्याज्ञया दिव्यं फलं दास्ये तवानघ! ६०
४९ इति दत्वा फलं तस्मै सर्वेषां पश्यतामपि
अदृश्योऽभून्महासिद्धस्तत्रैव गुरुसन्निधौ. ६१
५० तं सर्वे विस्मयाविष्टाः देवो वा सिद्धपूरुषः
कोऽद्दा? दत्तममुष्मै श्रीसोमेशनिकटेऽमलम् ६२
५१ प्रभुमायाकृतं सर्वं मेनिरे सकला जनाः
मनोहरः प्रभोश्चित्रं विदित्वा च तदाज्ञया. ६३
५२ चक्रे सबन्धुभिः सार्थं भोजनं निशि तापस!
दधार तद्दिने गर्भं बया सिद्धप्रसादतः. ६४
सुकलाभिः षोडशभी रेजे दौहृदलक्षणा
५३ क्रमात् पुरसवनं तस्याः सीमंतमकरोन्मुनिः. ६५
शाके नवाब्धिसप्तैकमिते याम्यायनेऽमले
५४ सर्वजिद्वत्सरे पौष्यशुक्लेऽनङ्गतिथौ शुभे
मृगशीर्षेऽर्धरात्रौ श्रीधनुर्लग्ने शुभैर्युते. ६६
५५ असूतपुत्रं तपसाभिवंदितं तार्तीयमब्जांशमलं बयांबा
सदत्सु देवेषु मृदङ्गभेरी मुखैः सुमैर्वृष्टिरभूद्धरण्यां. ६७
५६ ददर्श कञ्जायतलोचनं सा कञ्जाननं कञ्जनिभांघ्रिपादम्
कञ्जारुणं कञ्जदरारीरेखं बालं बया सूतिगृहे मुदा मुहुः ६८
श्रुत्वा शिशोर्जन्म मुदा मनोहरः स्नात्वा सचेलं निजबंधुवर्गैः
५७ पुण्याहमाराद्द्विजवर्यसंघैः संवाचयित्वा शुभवाद्यघोषैः. ६९
५८ दानानि सर्वाणि मुदा द्विजेभ्यो हिरण्यगोभूमितिलांबराणि

जातस्य पुत्रस्य च रक्षणार्थं सजातकर्माह्यकरोन्मनोहरः.



नरसिंह जन्मसमये माणिकप्रभुः श्रीमदनंतशयन
पद्मनाभस्वामिमूर्तिधारणं— तदाज्ञया
जातस्य शिशोर्नृसिंहलि नामप्रकटनम्

शिशुं समाघ्राय तदंगवैभवम् दृष्ट्वाश्रुमाश्रूणिमुमोच हर्षात्
वक्तुं समागात शिशुजन्मवृत्तं गुरोः समीपं स मनोहरो द्रुतम्
तत्रापश्यत् फणिकृतमहाभव्यतल्पे शयानम्
श्रीवत्सांकं हरिमजमहो नाभिपद्मे दधानम्
मेघश्यामं कनकवसनं शंखचक्राब्जमुख्यैः
नानाहारैर्मकुटवलयै रत्नदैर्भूषितांङ्गम्.
दृष्ट्वा तं देवदेवेश मनंतं सर्वतोमुखम्.
साष्टांगं प्रणिपत्याग्रे स्तोतुं समुपचक्रमे.
नमो वाङ्मनसातीतमूर्तये विश्वसाक्षिणे
प्रत्यक्चैतन्यरूपाय जगदानंदकारीणे.
नमः शुद्धाय नित्याय कैवल्यपददायिने
यच्चकिंचिज्जगत् सर्वं तन्मयाय महात्मने.
अणूनामणवे तुभ्यं महतां महते नमः
ब्रह्मादिस्तम्बपर्यंतव्यापिनेऽनंतरूपिणे.
अरूपायास्तु भक्तानां मुक्त्यर्थं रूपधारिणे
नमोऽव्यक्तायाद्भुताय वासुदेवाय ते नमः.
गुरवे सर्वलोकानां गुरूणां गुरवे नमः
अज्ञानध्वांतरवये प्रभूणां प्रभवे नमः.
रूपमेतन्मयादृष्टं प्राग्जन्मतपसः फलम्.

दानेन तपसा योगचर्यैर्द्रष्टुं हि दुर्लभम्. ७९
अतस्त्वत्पादयुगळे भक्तिः स्याज्जन्मजन्मनि
इदमेव वरं याचे मनसा वचसा गुरो! ८०
श्रुत्वा स्तोत्रम् माणिकस्तु धृत्वा स्वं रूपमादरात्
प्रोवाच वचनं मंदं मुग्धवत् प्रहसन्मुने! ८१
नायं बालो मनुष्यस्ते ब्रह्मैवा वै ह्यसंशयः
वंशस्य वृद्ध्यै जातः सेवार्थं मम भूतले. ८२
अनेन सुप्रजावृद्धिर्भविष्यति पुरः शुभा
इत्युक्त्वा पूर्ववत् तूष्णीं बभूव गुरुमाणिकः. ८३
मनोहरस्तु तद्वाक्यादानंदभरितोऽभवत्
मनोहरो द्वादशेऽह्नि नामकर्माकरोच्छिशोः. ८४
शुद्धज्ञाने नर इव सदा भाति वीर्ये तु सिंहः
पुम्सां मध्ये विमलवपुषा तेजसा नारसिंहः
प्रह्लादाख्यान् सकलपुरुषान् सङ्करोत्यात्मनिष्ठान्
तस्मादस्य प्रभवति गुणैर्नारसिंहाभिधानम्. ८५
ततो मङ्गळघोषैश्च बन्धुभिः सहितो मुदा
ब्राह्मणान् भोजयामास दक्षिणाद्यैरतंद्रितः. ८६
दिने दिनेऽसौ ववृधे शुक्लपक्षसुचन्द्रवत्
तद्बाल्यलीलया तुष्टौ बभूवतुरहर्निशम्. ८७
इदं पवित्रमाख्यानं यः श्रुणोत्यादरान्मुने!
इहलोकेऽखिलान् भोगान् भुक्त्वाचांतेऽच्युतं व्रजेत्. ८८

इतिश्रीब्रह्माण्डपुराणकथासारे, दत्तात्रेयजन्मपयःपारावारे, श्रीगुरुमहिमावर्णनरत्नावल्यां, माणिक्यविजये, प्रथमभागे, ब्रह्मांशनरसिंहप्रभु जनन नाम चतुर्दशोऽध्यायः



श्रीगुरु अवधूत!
श्रीसद्गुरु माणिक्यप्रभुमहाराजाय नमः!

# श्रीमाणिक्यविजयः

## प्रथमभागः

### पंचदशोऽध्यायः.

वत्सलः—

अथातः संप्रवक्ष्यामि प्रस्थानं मुक्तिदायकम्
मनोहरस्य योगादिसाधनं क्रमशो मुने! १



मनोहरानुजस्य मार्तांडस्य महावैराग्यधारणम्



कदाचिदनुजं प्रीत्या समाहूय गुणाकरम्
मार्तांडं प्राह विनयाद्भविष्यत्कार्यसिद्धये. २

मनोहरः—

तात! ते कथयिष्यामि रहस्यं श्रुणु सादरात्
शरीरिणां कालमृत्युर्नोलंघ्यः सुरमानवैः. ३
समाद्य समयः प्राप्तो मृत्योः सर्वार्थबोधकः

त्वं गृही भव मद्वाक्यादृणत्रयविमुक्तये. ४
आश्रमादाश्रमं गच्छेदिति वेदविदो विदुः
ऋणत्रयसमाविष्टो जायते पुरुषः सदा. ५
ऋषीन् सुब्रह्मचर्येण देवान् यागादिना सुत!
पितॄन् सुप्रजया सम्यक्तर्पयित्वा नृणीभव. ६
कृतं पूर्वतरैः पूर्वं धर्मं वेदात्मकं शुभम्
अस्मात् सव्यसनं नृणामंतरायकरं सदा. ७
अतः शुद्धमनाः शुद्धं गृहस्थाश्रममद्भुतम्
स्वीकुरु त्वं महाप्राज्ञ! संतत्यै निगमोचितम्. ८
इत्यग्रजस्य वाग्जालं श्रुत्वापि च यशस्करम्
रामरामेति मार्तांडः पिधाय श्रवणेऽग्रतः. ९
एकश्चरंस्तु सदा योगी द्वितीयं भवकारणम्
इतिमत्वाग्रज प्राह मनोहरमनन्यधीः. १०

मार्तांडः—

नाहं वृणे सद्वितीयं दुःखोदर्कं भवात्मकं
एकश्चरामि भवतः प्रसादादात्मशुद्धये. ११
असारं खलु संसारं सुखं नास्तीति सर्वदा
यं विजानाति स ज्ञानी भवत्येव न संशयः. १२
आदावनुभवे सौख्यमंते विषसमं भवेत्
यथा जालाद्विनिर्गत्य सुखं तिष्ठन्ति पत्रिणः. १३
तथाऽहं मोहतश्छिन्नस्तरिष्येऽमुं भवार्णवम्
सत्सङ्गलब्धया भक्त्या वैराग्येण द्रढीयसा. १४
तस्मान्मोक्षे मम प्रीतिः सदास्तीश न संसृतौ
इति तन्निश्चयं ज्ञात्वा तूष्णीमास मनोहरः. १५

प्रार्थितोऽपि स्वमात्रासौ नचचाल जितेंद्रियः
जन्मना माणिकस्यासीत् सर्वेषां ज्ञानसाधनम्. १६
मूकोऽपि वाचालयति श्रृणोति बधिरो गिरः
गिरिं पंगुर्लंघयति दीपं चांधः प्रपश्यति. १७
गुरुणा माणिकाख्येन भूकल्पतरुणा मुने !
सर्वे सन्तारयिष्यंति सुखं भीमभवार्णवम्.. १८
गुरौ सन्यस्तहृदयो मार्तांडः शुद्धमानसः
कालं सयापयामास मुग्धभावेन सन्ततम्. १९



मनोहरावसानसूचकदुर्निमित्तानि ज्ञात्वा हृदयरामलालस्तं प्रतिगत्वा स्तुत्वा च श्रीमाणिकप्रभो राज्ञया एककाले मनोहरहृदयरामलालयोः कैलास यात्राप्रसक्तिः



कदाचिद्रामलालस्तु चिंतयामास मानसे
निमित्तान्यतिघोराणि दृष्ट्वा बह्वशुभानि च. २०
गुरुसंदर्शनाकांक्षी कल्याणं समुपागतः
दृष्ट्वा मनोहरं शांतं प्रणम्य च मुहुर्मुहुः. २१
तस्थावञ्जलिना योगी तदग्रे विनयान्वितः
तमुवाच दयाभर्ता स्वमनोगतमादरात्. २२

मनोहरः—

समीपमागतः कालो मृत्योर्मम महामते !
यास्यासि ब्रह्मसदनं स्वच्छंदे नेह मृत्युना. २३
मामनुस्मर सर्वत्र रामं ब्रह्मात्मकं शुचिः
अनेन दिव्यकैवल्यं शीघ्रं यास्यसि मत्पदम्. २४
इत्युक्तः स शुचा प्राह रामलालो मनोहरम्

नोत्सहे जीवितुं देव त्वां विनाहं क्षणं गुरो! २५
आयुर्मानं मम ब्रूहि ज्ञानवैराग्यकारणम्
स्वच्छंदमरणोपायं सर्वाघौघनिबर्हणम्. २६
तच्छ्रुत्वा शिष्यवाक्यं तु सस्मार हृदि माणिकम्
दत्तांशं तत्प्रभावज्ञः सुतमप्यजमव्ययम्. २७
तदानीमागतः क्षिप्रं माणिकः पितृसन्निधिम
प्रणाममकरोद्देहबुध्या सर्वमनोहरः. २८
तयोर्मतं स विज्ञाय कालस्य गतिमीश्वरः
प्रोवाच पितरं धीमान् वचो भाव्यर्थसूचितम्. २९

माणिकः—

नहि जनक! तवायुः कालकल्पा समागात्
तव तु हृदयलाल! प्रादुरासीत् स मृत्युः
भवति च सुहृदोर्वा योगिनोरेककाले
विमलसुखविदेहा मुक्तिरायुष्मतोश्च. ३०
स्वनिलयमिह याहीशाज्ञयासर्वसिद्धिः
भवति हृदयलाल प्राप्तकालोसि योगिन्
ऋषिसितिदिनसंख्या सावधिर्वा विकल्पा
दिवि भुवि च सुधन्यौ पूर्वपुण्यात्तदेहौ. ३१
इत्युक्तः प्रभुणा तेन गुरुम नत्वा मनोहरम
तदाज्ञयागतो रामलालः स्वं निलयं मुने! ३२
चित्तैकाग्र्यं समाधाय गुरुमेवानुचिंतयन्
कालं निरीक्षयामास त्यक्तसर्वपरिग्रहः. ३३
अत्र श्रुत्वा वयादेवी प्रभुवाक्यं शुचान्विता
भर्तुः समीपमागत्य सपुत्रा प्राह सत्वरम्. ३४

का गतिर्मे ? वद ब्रह्मन्! त्वयि देवगतिं गते
त्वया साकं गमिष्यामि पतिलोकमनन्यधीः. ३५
इत्युक्तः स सतीं प्राह धर्मं वीक्ष्य मनोहरः
बाला इमे तवसुताश्चास्वतंत्रा महामते! ३६
कः पोषयति? चान्नाद्यैर्गते त्वयि कुटुम्बिनि!
अतस्त्वं शीलसंपन्ना स्मरंती मां निरंतरम्.
पालयं तान् स्वाश्रयस्थान् मदाज्ञापरिपालीनी!
अनेन ते धर्मसिद्धिर्भविष्यति न संशयः. ३८
अस्मानुद्धर्तुमीशानः स्वयमागतवान् प्रभुः
उपदेक्ष्यति ते ज्ञानं जायं! संसारभेषजम्. ३९
अयं न मर्त्यः पुरुषःपुराणो दत्तः स्वयंज्योतिरनंतरूपः
संस्थापनार्थं बहुधामतानामद्वैततात्पर्यविनिर्णयेन. ४०
अयं पुरा मत्स्यवपुर्महात्मा हत्वा हयग्रीव सुरद्विषञ्च
वेदान् समादाय स्वयंभुवेऽदाद्राजर्षये धर्मगतिं व्यतानीत्. ४१
कूर्मस्वरूपः खलुमन्दराद्रिम पृष्ठे निधायाणुमिवातिलीलया
दत्वामृतं देवगणाय मोहिनी रूपेणदैत्या नहरत सुरेड्यः. ४२
महीं ररक्षाय मुगात्तचक्रः संहृत्य दैत्यं कनकाक्षमुग्रम्
वराहरूपेण रसातलस्थां संस्थाप्य पूर्वं जगतां हिताय. ४३
नृसिंहरूपेण हिरण्यकश्यपं नखैर्विदार्यार्थिनमर्भमारात्
प्रह्लादमारक्षयदेषजायं देवार्थितः शंतनुतेऽत्र दत्तः. ४४
यान्नाच्छलेनाच्छिनदस्य गर्वं भूत्वा वटुर्दैत्यबलेः परात्मा
निःक्षत्रियांतामकरोत् स रामः कुठारपाणिर्भुवमादरेण. ४५
रामावतारेण स लक्ष्मणेन रराज हत्वा किल रावणादीन्
सीन रमाराधितपादपद्मे नासौ परं ब्रह्मनचान्यदस्ति. ४६

कृष्णावतारेण कलीप्रमत्तान् साल्वादिकान् कंसमुखान् जगाय
गोगोपिकागोपगणानरक्षय द्वंधाद्विमुच्याथ पितॄन् स्वभक्तान्. ४७
बौद्धेन जैनानिह मोहयित्वा चचार सर्वावयवैर्दिगंबरः
कलौ भविष्यत्यखिलार्थसिद्ध्यै कल्किर्वधार्थं खलु म्लेच्छजानाम्. ४८
स एव चास्मत्कुलपावनार्थं जातः स्वयं दत्त इहाखिलात्मा
न्नबुद्धिरस्मिन्नकुरु त्वमाद्ये मातिक्य पुत्रेऽखिलधर्मपाल्ये. ४९
दीर्घायुरारोग्यमनंतभाग्यं संतानवृद्धिं सुयशः शुभञ्च
करोति युष्माकमसौ पुराणः चिंतां त्यजाभ्वीश्वर एष साध्वी. ५०
त्वमप्येवं विदित्वाधिं मानसीं त्यज दुस्तराम्
हनूमन्नुहरं चिम्णे प्रभोः शोकं किमंतिके? ५१
मातृवत् परिपातीशो नररूपेण सर्वदः
युष्मानेन सर्वार्था वृद्धिमेष्यंत्यसंशयः. ५२
गुरुवाक्यानुसारेण संप्राप्ते सप्तमीदिने
स्नात्वा मनः समाधाय प्रमुदा स मनोहरः. ५३
प्राणानाकृष्य यत्नेन प्रभोरग्रे गतव्यथः
जहावसून् ब्रह्मरंध्रात् सर्वेषां पश्यतामपि. ५४
तस्मिन्नेव दिने रामलालो ब्रह्मपदं गतः
देवदुन्दुभयो नेदुःपुष्पवृष्टिश्च खाच्युता. ५५
महाध्वनिरभूत् तत्र गुहास्वद्भुतदर्शनः
अहो! धन्यस्तयोधन्यः साधुरेव मनोहरः. ५६
जग्मुस्तत्कीर्तिमखिला जनास्तत्र महामुने!
हनूमान् प्रेतकार्याणि कृत्वा तातस्य मुक्तये. ५७
भोजयित्वा द्विजान् सर्वानकरोद्दानमुत्तमम्
अथ कस्मिन् दिने चिम्णा योगाभ्यासबलाद्गता

माणिक्यस्य प्रसादेन मुक्तिमापापुनर्भवाम्. ५८
ततो हनूमान् पितृमातृभक्त्या चचार माणिक्यपदार्त्तचित्तः
सदा सदाचाररतः सुयोगी सद्धर्मशीलः कुशलः कलासु. ५९
इममध्यायमखिलं येऽश्रुण्वंत्यन्वहं जनाः
ते दत्तस्य पदं यांति प्राप्य सिद्धिरिहातुलाः. ६०

इतिश्रीब्रह्माण्डपुराणकथासारे, दत्तात्रेयजन्मपयःपारावारे,श्रीगुरु-
महिमावर्णनरत्नावल्यां, माणिक्यविजये, प्रथमभागे,
मनोहरस्य कैलासगमनं नाम
पञ्चदशोऽध्यायः



श्रीगुरु अवधूत!
श्रीसद्गुरु माणिक्यप्रभुमहाराजाय नमः!

# श्रीमाणिक्यविजयः

प्रथमभागः
षोडशोऽध्यायः.

वत्सलः—
श्रुणुष्वाघहितः साधो! सद्वंशस्य कथां शुभाम्
यत्र संगीयते दत्तस्तन्मुक्तेः साधनं परम्. १

 पतिमरणदुःखितायाः स्वमातुर्दुःखापनोदार्थं 
श्रीहनूमत्प्रभुकृत ज्ञानोपदेशक्रमः

पत्यौ स्वर्गं गते देवी बयांबा स्वसुतैः सह
चिंतयामास पुत्राणां भविष्यत्कार्यगौरवम्. २
नोपनीतौ सुतौ ह्येतौ पित्रा ब्राह्मण्यसिद्धये
अभूज्ज्येष्ठो ब्रह्मचारी विवाहस्तु कथं भवेत्? ३
दारिद्र्येणापि संतप्ता दुःखोदर्केण चाप्यहम्
किं कर्तव्यं? मयेदानीं पुत्राणां हितचिंतने. ४
इति व्याकुलचित्तां तां बयांबां हनुमानसौ
प्राह प्रसन्नहृदयं गुरुवाक्यमनुस्मरन्. ५

हनूमानुवाच—

चिंतां मा कुरु कल्याणि! दुस्सहं कर्मनिर्मिताम्
दैवाधीनमिदं सर्वं दैवे सर्वं प्रतिष्ठितम्. ६
पञ्चभूतात्मको देहस्त्वङ्मांसरुधिरास्थिमान्
मलमूत्रादिपात्रं हि क्षरः कर्मगुणोद्भवः. ७
मूढास्तामनुशोचंति श्वसृगालाश्रयां तनुम्
क्रिमिविड्भस्मकुर्यादां स्रवंतीं मलपुद्गलैः. ८
देहेन किं करिष्यंति? जडेन स्वोपभोगिना
दुःखोदर्केण दुर्गंधपूरितेनाभिमानिनः. ९
देहसौख्याय मूढस्तु दारागारसुतादिकान्
भूषणांबरधान्यानि संग्रहिष्यंति सर्वदा. १०
लयेषु तेषु शोचंति मुह्यंति सततं नराः
अस्वतंत्राह्यप्रबुद्धा प्रमत्ताः कामपाशतः. ११
गृहासक्तः पतत्यंधं कपोत इव मूढधीः

निराशः सञ्चरन् योगी सुखं गच्छत्यनामयम्. १२
प्रवाहपतितानां च काष्ठानां मातरन्वहम्
संयोगश्च वियोगश्च भवत्येवावशः शिवे! १३
विदित्वेत्थं शरीरादौ संगं त्यक्त्वा सदा मुनिः
आत्मानं शोधयेन्मात! एनेन सुविचारतः. १४
तेनाज्ञानं स्वयं नाशं याति ध्वांतं यथा रवेः
प्रसन्ने मनसि ब्रह्म स्वयमेवावतिष्ठते. १५

वर्यांबोवाच—

जडदेहः काष्ठरूपः क्षरः सर्वमलाश्रयः
जीवस्तु भिन्नो देहादेर्नित्यः पूर्णश्चिदात्मकः. १६
संसर्गः सुखदुःखानां कस्य वा? वद सुव्रत!
मोहमानौ कुत्रगता? वित्यस्मिन् संशयोऽस्तिहि. १७

हनुमानुवाच—

मातः श्रुणु वचो गुह्यम् वच्मि प्रभुवराश्रयात्
धन्यासि त्वं यतो जातः स्वगृहे माणिकप्रभुः. १८
देहेंद्रियैरहंकार संबंधो यावदस्ति हि
संसारस्तावदस्त्येव ब्रह्मणोऽप्यविवेकतः. १९
मिथ्याभूता संसृतिस्तु न स्वयं विनिवर्तते
ध्यायतो विषयान् स्वप्ने यथा मिथ्यार्थदर्शनम्. २०
अविद्याकार्यसंसर्गाहंकृतेर्बलतस्तथा
अपार्थका संसृतिस्तु रागद्वेषयुता सदा. २१
मनोबंधो मनश्चैव संसारोऽहंकृतिः शुभे
मनस्संबंधात् जीवात्मा ममाहमिति मन्यते. २२
नानावर्णसुमैर्विद्ध स्फटिकस्तत्तदाकृतिः

१२ यथा भाति तथैवास्य वस्तुतो नास्तिरंजना. २३
आत्मनः संसृतिर्बुद्धि विषयादिसमीपतः
१३ आत्मा मनः प्रगृह्यात्र तद्गतान् चिंतयत्यसौ. २४
अवशो वर्ततेह्यात्मा जुषन् कामान् गुणैर्युतः
१४ सृष्ट्वा मनोगुणानादौ कर्माणि च ततः शिवे! २५
सत्वं रजस्तम इति गतिरेषामतः परम्
१५ इत्थं कर्मनिमित्तेन जीवस्त्वाभूतसंप्लुतम्. २६
भ्रमत्यविद्यावशगः कुम्भकारस्य चक्रवत्.
गच्छत्यायाति सततं नीचोत्तमकुयोनिषु. २७
१६ प्रळयेऽसौ वासनात्मा जीवस्वैः कर्मभिः पुनः
अनाद्यविद्यावशतस्तिष्ठत्यभिनिवेशतः. २८
१७ जायते सृष्टिकालेऽसौ पूर्वकृद्वासनात्ततः
पुनरेवं जायतेऽत्र घटीयंत्रमिवामले. २९
यदा कदापि सत्संगं लभतेपूर्वपुण्यतः
१८ जायते भक्तिरतुला गुरौ विष्णौ तथा शिवे! ३०
वर्धते तत्कथासक्तिः क्रमात् सत्सङ्गतः शिवे!
१९ ज्ञानं वैराग्यममलं विज्ञानं परमार्थदम्. ३१
ततः स्वरूपविस्फूर्तिः स्वयमेव हि जायते
२० त्यक्तसङ्गा सुखकरी मुक्तिरूपा च चिन्मया. ३२
आदौ गुरुप्रसादेन शास्त्रार्थज्ञानतः क्षणात्
२१ स्वानुभूतिं परां लब्ध्वा सुखीभव जनन्यलम्. ३३
एवं विचार्य सततं मयोक्तं तत्वनिर्णयम्
२२ चिंतां त्यक्त्वा गुरौ सर्वं न्यस्य भारं दृढीभव. ३४
सुखं वा यदि वा दुःखं आयाति दिनरात्रिवत्

नोल्लंघ्यं देवताभिश्च मानवैश्च किं? मीश्वरि!
इत्युक्त्वा विरराामासौ हनूमान् विजितेंद्रियः
तद्वाक्याद्गतमोहाभूद्बयांबा धर्मरूपिणी. ३६
माणिक्यं दैवतं मत्वा दत्तांशं चित्सुखं महत्
नटीवत् सर्वकार्याणि व्याकरोद्विगतस्पृहा. ३७

## यज्ञेश्वरसोमयाजीकृतमाणिक्यप्रभुस्तुतिः

कदाचिन्माणिके तल्पे स्थितेऽलंकरणैर्युते
सर्वे जनाः समायाता दर्शनार्थे फलैः सह. ३८
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चान्ये सहस्रशः
सुममाल्यैर्मधुरसैः फलैश्चक्रुस्तदर्चनम्. ३९
तदाज्ञया चोपविष्टाः सन्मुखे श्रीगुरोर्मुने!
तेषां यथा यथाकामं प्रवर्षयति माणिकः. ४०
तदागतः सोमयाजी यज्ञेश्वर इति स्मृतः
सदाचाररतः शांतः श्रद्धावाननसूयकः. ४१
पुरो निधाय सुफलान्यानम्य श्रीगुरोः पदं
उपविष्टस्तदा प्राह विनयात्तापसोत्तम! ४२

यज्ञेश्वरः—

नमो! माणिक्याय त्रिभुवनमहानंदतनवे
नमो! दत्तात्रेय प्रकटनिजरूपाय गुरवे
नमो! योगीन्द्रायाखिलमतनिदानाय प्रभवे
बयांबापुत्राय त्रिदशमुखवंद्याय च नमः! ४३
त्वदीयं सन्नामप्रभवतिकलिं तर्तुमवनौ
त्वमेवाधारोऽस्य स्वजनलयसंरक्षणपटुः
हरीशब्रह्मांशैरधिगतनृजन्मात्र भजताम्

मुदं माणिक्याख्यः समजनि महारत्नमधुना. ४४
गुरो ते सारूप्यं भजति सकृदालोकनवशात्
३६ समीपं माणिक्यप्रभुवरमहेशेति पठतः
अमर्त्यः सालोक्यं पदकमलभक्तेश्च निरतम्
३७ मनुष्यः सायुज्यं त्रिभुवनतनुध्याननियमम- ४५
दरिद्राणां दैन्यं तवपदनतानामघचयम्
गदार्तानां दुःखं हरति खलु माणिक्यपदकम्
३८ सदात्वत्पादाब्जस्मरणपरमानंदमनसाम्
गुरो सद्योमुक्तिं दिशसि भवदाहं शमयसि. ४६
३९ हृदि त्वत्पद्मांघ्री वचसि तवनामाति मधुरम्
सुपूजा हस्ते ते नयनयुगळे मूर्तिविभवः
४० नमस्कारो मूर्ध्ना भवतु मम सर्वेश्वर मणे
गुरो त्वत्प्रीत्यर्थं सततमिह सर्वेंद्रियगणः. ४७
४१ नजाने त्वत्पूजाविधिममरमान्याखिलगुरो
न सेवां नो दानं व्रतनियमयोगाध्वरगतीः
४२ विभो! भक्त्या स्तोत्रं चरणयुगळेऽहं ह्यवनतिम् ४८
करोसि क्षंतव्यं सततमपराधानिह कृतान्
शिरोभूषाभूयाद्वचसि रुचिभाषा ममतनौ
सुवेषा माणिक्यारुणचरणधूळिः प्रतिदिनम्
सदा सत्संतोषा गतहृदयदोषा शुभकरी ४९
४३ नृजन्मन्येषास्याद्भवजलधिशोषा श्रुतिनुता.
यदा माणिक्यांघ्री भजति स पुमानुद्धृतकुलः
स धन्यः स श्लाघी स खलु गुणवान् नीतिचतुरः
प्रमाणं यद्वाक्यं शुभममृतसिद्धार्थफलदम्

प्रसादं यद्दत्तं स इह मम चित्ते विलसतु. ५०




हनूमत्प्रभौ विरक्तेऽपि बलात्कारेण यज्ञेश्वर
सोमयाजी हनूमते स्वतनयां लक्ष्मी-
नाम्नीं कन्यामदादिति कथा

इत्यभिष्टूयमणिक्यं यज्वा प्राह विनम्रधीः
लक्ष्मीनाम्नी सुतनया ममास्ति वरकन्यका. ५१
हनूमते प्रदास्यामि तां मुदा स्वीकुरु प्रभो!
तवसंबंधमाकांक्षी स्वयमेवागतः प्रभो! ५२
इत्युक्तो माणिकः प्राह भाव्यर्थमनुचिंतयन्
अग्रजं मातरं दृष्ट्वा यज्ञेश्वरमगाधधीः ५३
वयं दरिद्राः कृपणाः धनिनो यूयमीश्वराः
संबंधश्चावयोरद्य भविष्यति कथं? मुने! ५४
तथाऽपि वक्ष्ये शुक्लं चेद्गृहाण वचनं मम
उत्पद्यंते विलीयंते दरिद्राणां मनोरथाः. ५५
श्रुत्वा वाक्यं बया प्राह यज्ञेश्वरमतंद्रिता
हास्यं तद्वचनं मन्ये दरिद्रायातुराय च. ५६
को दास्यति? वरां कन्यां स्वयमेवागतः पुमान्
विद्यां कुलं धनं रूपमिच्छंति सकलाजनाः. ५७
धनमेव प्रधानं हि कन्यादातुर्यशः कुलम्
न गौरवं च विद्वत्वं किं तु भाग्यं वरं मुने! ५८
पुनर्यज्ञेश्वरः प्राह बयांबां श्लक्ष्णया गिरा
नानृतं मे वचो देवि! दास्ये कन्यां हनूमते. ५९
इति तन्निश्चितं ज्ञात्वा हनूमान् प्राह विह्वलः

नाहं वृणोमि भगवन्! ब्रह्मचर्यं भवच्छिदम्. ६०
यस्य बंधुजना नास्ति धनं भाग्यं गृहादिकम्
तस्य दारग्रहो व्यर्थः परं दुःखाय कल्पते. ६१
इति तस्य मतं ज्ञात्वा यज्ञेशः समुदा ततः
ब्राह्मणान् वेदसंपन्नाः समाहूय स सत्वरम्. ६२
नक्षत्रं सुविचार्याथ प्रभं रध्रे प्रहृष्टधीः
निश्चितार्थं चकारास्य कन्यायाश्च फलैः शुभैः. ६३
विप्रेभ्यो दक्षिणां दत्वा ययौ स्वनिलयं मुनिः
बया प्रोवाच तनयं दत्तांशं माणिकप्रभुम्. ६४

बयांबोवाच—

कन्या समागता युष्मत्प्रसादात्स्वयमादरात्
कथं भूया? द्विवाहोस्य किंचिन्नास्ति गृहे धनम्. ६५
इति मातृवचः श्रुत्वा सस्मार हृदि माणिकः
लक्ष्मीं भाग्यप्रदां देवीं नृणामानंददायिनीम्. ६६
अभूत् संपत्समृद्धिस्तु गृहे धान्यादिरूपिणी
दृष्ट्वा भाग्यं बयादेवी कनकांबररत्नचयम्. ६७
विवाहयत्नमकरोत् गृहालङ्करणादिना
कन्यां गृहीत्वा यज्ञेशः शुभवाद्यैर्द्विजोत्तमैः. ६८
वरस्य सन्निधिं प्राप्य सदारः सहबंधुभिः
कल्याणमंटपं प्राप्य वरं संपूज्य भक्तितः. ६९
हनूमतेऽदात्तां कन्यां सुमुहूर्ते शुभे दिने
दानानिचाकरोत् तस्मै गोभूमिकनकानि च ७०
ब्राह्मणान् भोजयामास षड्रसैरमृतोपमैः
दत्वा तेभ्यो दक्षिणादीन् तदाशीः परिगृह्य ७१

ययौ स्वनिलयं विप्रश्चाज्ञया श्रीगुरोर्मुने!
सर्वेषां समभूत् सौख्यं विवाहे प्रभुकल्पिते. ७२
रराज लक्ष्म्या स्वगृहे हनूमान गार्हस्थ्यधर्मानवलंब्य मुख्यान्
गुरूक्तमार्गेण मुदा सकालं निन्ये गुरून्यस्तसमस्तभारः. ७३

इतिश्रीब्रह्माण्डपुराणकथासारे, दत्तात्रेयजन्मपयःपारावारे, श्रीगुरु महिमावर्णनरत्नावल्यां, माणिक्यविजये, प्रथमभागे, हनूमद्विवाह वर्णनं नाम षोडशोऽध्यायः



श्रीगुरु अवधूत!
श्रीसद्गुरु माणिक्यप्रभुमहाराजाय नमः!

# श्रीमाणिक्यविजयः

## प्रथमभागः

### सप्तदशोऽध्यायः.

अथ माणिकचरितं ते कथयाम्यखिलार्थसिद्धिदं पुंसाम्
यस्यश्रवणान्मुक्तिः साक्षाद्भवति भ्रमः स्वयं दहति. १

श्रीमाणिक्यप्रभोरुपनयनकथाप्रसक्तिः— गायत्र्यादि देवतासंदर्शनं च

उपनयनं विनतानाम् देशिकराजस्य वच्मिकरुणाब्धेः

शिक्षार्थमग्रजानामुररीकृतमन्त्रयेन सत्कर्म. २
एकस्मिन् शुभदिवसे पर्यंकस्थे विभावुषस्यार्ये
सुस्नातोऽगाद्धनुमान् सेवार्थं तत्प्रभाववित् प्रेरणा. ३
वीणावेणुमृदंगैर्नटकाः सूताश्च गायकाः सर्वे
तस्मिन्नेवाजग्मुर्निद्राव्यग्रं विबोद्धुमारात् तम्. ४
गायंति यशः सम्यङ्नृत्यं त्वाद्यस्व सम्मुखेनार्यः
प्रणमंति जनास्तोत्रैः प्रमुदा नटवंदिमागधाः सर्वे. ५
प्रत्यहमित्थं प्रातः पूजां कुर्वंति भक्तिभावेन
राज्ञोऽमात्यप्रमुखा यथैव सेवां तथा जना विभवैः. ६
पूजां कृत्वा हनूमान् माणिक्यं प्राह सन्नया वाचा
सर्वेषां मध्येऽसौ ज्ञात्वा ब्राह्मण्यधर्ममतिशुद्धः. ७

हनूमानुवाच—

मौंजीबंध स्त्रीकुरु धर्मार्थं ब्राह्मणेषु विहितं यत्
तत्कर्म सकलजनता संतोषाय प्रभोऽधुना देव! ८
सर्वज्ञस्य तवाग्रे नाहं शक्तः प्रवक्तुमुचितं यत
ज्ञात्वापि ते प्रभावं विप्रत्वं मे प्रबाधते चेतः. ९
गर्भाष्टम्येव विहितं ह्युपनयनं देव! भूमिदेवानां
आश्रमधर्मेष्वचरन् मत्पूर्वाश्चाधुनापि सकलाश्च. १०
इत्युक्तोमाणिक्यस्तमुवाचाग्रे प्रहस्य सहजातम्
वर्णाश्रमजात्यादेर्दूरस्येदं व्रतं कथं घटते? ११
मलमयपुद्गलपिण्डे देहे नास्ति द्विजत्वमप्राप्तम्
देहाद्भिन्नेचात्मनि निर्लिप्तेऽस्मिन्निदं कुतो वाच्यं? १२
ज्ञानविहीनः शूद्रः सम्यज्ज्ञानाद्द्विजत्वमायाति
न ब्रह्मसूत्रमात्राद्ब्राह्मण्यं ब्रह्मभावसुखमेव. १३

ज्ञानस्थितयं विप्राः कर्माधीनाभवंति गुणबद्धाः
नहि कर्मणा च प्रजया त्यागे नैवेति वेदसिद्धत्वात्. १४
मनसः कर्मविशुद्ध्यै न तु मुक्त्यै भवति दोष दृष्टित्वात्
तेजसि न तमोस्त्यस्मिन् तेजो! नहि वित्सुकर्मणोः साम्यम्. १५
दृश्यादिभोगसक्तस्यैश्वररुचिकल्पनाय सत्कर्म
उररीकृत मस्मात्तैः पूर्वाचार्यैः क्रमात् परप्राप्त्यै. १६
इत्थं वदति च स गुरौ तूष्णीं हनुमान् स्थितोऽग्रतः साधुः
तद्वाक्यात् सकलास्ते हृष्टाः सुविचारसिद्धमुक्तित्वात्. १७
तस्मिन् काले सिद्धः समगात् पश्यत्सु सर्वलोकेषु
काषायदण्डधारी सुतपाः सद्गुरुराजयोगाढ्यः १८
उत्तस्थु रादरात् तं स सदस्यावीक्ष्यतं विना गुरुणा
प्रभुणा समपीठस्थम् मानितमार्यं प्रणेमुरंतिस्थाः १९
स उवाच माणिकेंद्रं विनयाद्धर्मार्थं बृंहितं वाक्यम्
लोकाननुसृत्यैवं तच्छृणु दीन! प्रभोः सुचारित्रम्. २०
लब्ध्वा नृदेहमित्थं चेद्वदसि त्वं भवंति भुवि मूर्खाः
श्रेष्ठो यदि ह्याचरति प्रभुरासक्ता तथैव जनता च. २१
रामाद्यवतारेषु प्रकृतिस्थस्त्वं यथैव शुभलीलाः
कृतवानस्यास्मिन्नपि स्वीकुरुमायां त्वदाश्रयामन्याम्. २२
आचार्यवान् हि पुरुषो वेदेत्याम्नाय वाक्यतः पुरुषः
गुरुमेव समित्पाणीर्गच्छेज्जिज्ञासुरादराद्ब्रह्म. २३
तेनोदितेन कुशलो भूयाद्वाक्यार्थनिर्णयेनाशु
अयमेव ब्रह्मचारी प्रभुवर! किमु वच्मि? तेऽतिकं धर्मम्. २४
लोकाननुसृत्य त्वं स्वीकुरु व्रत मग्रजन्मशिक्षाय
नोचेत्कर्मविहीना भ्रष्टाश्च भवंति नष्टमतयस्ते. २५

इत्युक्त्वा प्रययौ श्रीगुरुणाश्वस्तः स्वधाम सिद्धस्तु
सहजस्तदभिप्रायं ज्ञात्वा संतुष्टचेतनोऽभूत् सः २६
उपनयनयत्नमकरोत् स्वगृहालङ्करणधान्यधनमुख्यैः
वस्तुभिराश्रितबृंदैर्ज्ञातिभिरानंदगीतवादित्रैः. २७
शुभलग्ने सुमुहूर्ते मङ्गळवाद्यैः स एत्य माणिक्यम्
प्राह प्रसन्नवाचा सहजः पूजां विधाय भावज्ञः. २८
एहि गृहं तव शीघ्रं मङ्गळमभ्यञ्जनार्थमव्यग्र
संप्रार्थयन्ति सकला स्त्वां व्रतसिद्ध्यै प्रहृष्टचेतस्काः. २९
गत्वा गुरुरुद्वसितं हृष्टस्वजनैर्मुदाग्रजोक्त्यासौ
मङ्गळमज्जनमकरोद्गातिक्याद्यैः सुवासिनीसंघैः.. ३०
माणिक्यं पीठस्थं धृत्वासुदुकूलतिलकमुख्यानि
पुण्याहमकुर्वंस्तं विप्रा मंत्राक्षतैश्च निगमोक्तैः. ३१
तस्मिन् काले देवा मानवचिह्नै समागताः शतशः
ब्रह्मप्रमुखाः कर्तुं माणिक्यस्योपनयनमवनिं ते. ३२
ब्रह्माद्या द्विजवेषै र्दिक्पालास्ते सुराजचिह्नैश्च
वाणीमुख्या वनितावेषैरम्भादयस्तु गणिकाख्यैः.
कनकाभरणदुकूलैर्वस्त्रैर्मंदारमालिकाभिश्च
परिमळगंधद्रव्यैर्मधुरससुफलैः समाजग्मुः. ३४
एवं परिवव्रुस्तं नानादेशात् समागताः सकलाः
गुरवे समर्प्य सर्वाण्याभरणादीनि भक्तिनम्रांगाः ३५
गुर्वाज्ञयोपविष्टा ब्रह्माद्याभाद्विजादयः क्रमशः
स्वैस्वैर्विभवैः सेवां ते कुर्वन् माणिकस्य दत्तस्य- ३६
दृष्ट्वा तास्तत्रस्था विस्मयमापुः स्वतेजसादीप्तान्
केमीत्य पूर्वविभवाह्यदृष्टपूर्वाः सुरालिसंकाशाः. ३७

एवं वदति जनेऽसौ सहजो हृष्टः पुरोहितं प्राह
संप्राप्तं सुमुहूर्तं मौंजीबंधं चकारयाशु त्वं. ३८
तच्छ्रुत्वा भेर्यानकदुन्दुभिघोषः सुखास्पदश्चाभूत्
वेदोक्तैर्माणिक्यं चाक्षतकुसुमैरवाकिरन् विप्राः.
स्वस्त्यस्तु सतामनिशं श्रीरस्त्वशुभानिनाशमायां तु
कल्याणमस्तु जगतां गोविप्रेभ्यश्च सर्वतस्ते. ४०
वेदोक्तकर्मविधिना कृत्वाशीर्माणिकायविप्रेंद्राः
स पुरोहिताश्च वटुना वह्नौ होमं च कारयामासुः. ४१
दण्डं दधार कामान् दण्डयितुं ब्रह्मणार्पितं रत्नः
कौपीनं सर्वेषां वैराग्यार्थं च भारतीदत्तम्.. ४२
मौंजीमणाजिनमपि गिरिजादात् सर्वबंधमुक्ताय
वस्त्राणि शची प्रादाज्जगदावरणाय दिव्यदेहाय. ४३
उपदेशार्थं सहजः स्वांकेचानीय माणिकं तस्थौ
विप्रेराज्ञतस्सन् मङ्गळवाद्येषु घोषितेषूच्चैः. ४४
गायत्री सावित्री रहसि समागत्य तत्र वाणी च.
मंत्रस्वरूपविभवा तस्थुर्वदने गुरोः परायत्ताः. ४५
देवीर्दृष्ट्वा सहजोविस्मयमाप प्रहृष्टरोमांचः
कस्मादुपदेशयितुं? स्वीकृतवानस्मि मर्त्यबुद्ध्यामुम. ४६
एतेह्यदृष्टपूर्वाः सर्वे देवा मनुष्यरूपेण
संप्राप्ताः संदेहोनास्तीत्यभिवंद्य माणिकं सहजः. ४७
देवानीत पदार्थान् दृष्ट्वा सर्वे विसिस्मिरे प्राज्ञाः
दत्तः समजनि भूम्यां माणिक्याख्यः प्रभुः सतां मुक्त्यै. ४८
मायामाणवकाय प्रादाद्भिक्षां रमा कनकपात्रे
मौक्तिकमयतण्डुलघन मधुरापूपैश्च दिव्यशाष्कुलिकैः. ४९

हरिहरसुरवरमुख्या वस्त्राभरणानि गंधमाल्यानि
३८ आशीर्वादं कृत्वा ददुरमरा वामनाय च यथैव. ५०
आशीः स्वीकृत्यासौ रेजे देवेषु विष्णुमूर्तिरिव
नक्षत्राणां चन्द्रः प्रभुमाणिक्यः स्वतेजसा तत्र. ५१
विप्रानाराधयितुं हनुमानाह स्वमातरं प्राज्ञः
४० बहवोविप्रप्रमुखाः सन्तिक्षुधिताः प्रजाश्च वीक्षस्व. ५२
पाकं स्वल्पमभूदिदमंतेषां तृप्तयोंऽब ! नालं यत्
४१ किं कुर्मोंऽस्मिन विषये? मतिहीनोऽस्मि प्रभुः प्रमाणं मे. ५३
इत्युक्ता सुत मूचे गुरुभावज्ञा बया दृढं वाक्यम्
४२ मा कुरु चिंतामस्मिन् प्रभुरस्तीशः सुरक्षणे भजताम्. ५४
इत्युक्त्वा प्रययौ सा महानसं षड्सादिसंयुक्तम्
४३ आहूयविप्रसंघान् सहजः पात्राण्यकल्पयत तेषाम्. ५५
स्त्रीबालवृद्धसहितास्तस्थुः सर्वत्र भूसुरस्तोमाः
४४ नालं वक्तुं तेषां द्विजगण संख्यामनंतसंज्ञां ताम्. ५६
तान् दृष्ट्वा भयतप्ता प्रभुनिकटं प्राप्य सा बयादेवी
४५ गृहकृत्यं समवोचत् सरहस्यम् माणिकेंद्रमखिलज्ञा. ५७
तच्छ्रुत्वा प्रभुराजस्त्वन्ने दण्डं निधाय सुपदार्थान्
४६ सर्वान् स्पृष्ट्वाप्रसुवं प्राहसमृद्धिह्युपैष्यतीदं च. ५८
इत्युक्ता प्रभुणा सा विप्रानन्यांश्च भोजयामास
४७ तृप्तास्ते सुपदार्थैरमृतनिभैः षड्साश्च सकलाश्च. ५९
पाक हि यथा पूर्वं तथैव सिद्धं विलोक्य सहजं स्तत्
४८ लेभे परमाश्चर्यं माणिक्य दत्तमेव निश्चित्य. ६०
तस्मिन्नहनि कुबेरो मानुषरूपेण सन्निधौ स गुरोः
४९ विप्रेभ्योऽदात् द्रविणं भूरिमुदा याचकौघःमुख्येभ्यः. ६१

प्राग्देवानाममृतं यथैव विष्णुस्तथैह माणिक्यः
भूदेवानां तृप्तिं ह्यकरोदन्नादिदक्षिणाभिश्च. ६२
भुक्त्वाविप्राः सर्वे तृप्ता माणिक्य माहुरव्यग्राः
त्वन्नः कृते सुजातः पृथ्व्यां दत्तांशसंभवः श्लाघ्यः. ६३

ब्राह्मणादयः—

जयतु ते गुरो! दीनसुरतरो! कलुषकुजमरो! सुमतिजितगुरो!
जयतु जयतु भो भुवनगणविभो! जयतु ते स्वभू माणिकप्रभो!. ६४
भवविनाशके! सौख्यदायके! सुखमयात्मके! विश्वव्यापके!
मानसं मुदे रमतु मे मनो हरकुमारके! देव! माणिके! ६५
अमृतसन्निभं चरितमद्भुतं कलिमलापहं चित्सुखप्रदम्
तवगृणंतिये तत्वमेधया भुवि भवत्यमी मुक्तिदा जनाः. ६६
निस्वविप्रश्रीप्रापकाद्गुरो! गोपजीवसंरक्षणादिह
शाकविक्रयीसन्ततिप्रदाद्रक्षिताजना भवभयात् त्वया. ६७
त्वद्यशः सुधासागरं मुदा प्लावयंति ये पूर्वसञ्चितैः
सञ्चरन्ति वैकुण्ठमन्दिरं ते पुनर्भवं माणिकप्रभो! ६८
तक्षणादलं तरति संसृतिं सकृदुपस्पृशन् पापवानपि
किमुतसंततं ते पदांबुजं स्मृतवतां गुरो मुक्तिरद्भुता. ६९
नहि गुरो! वयानंदनो! भवा नमरयाचनायत्ततनुरसि
सकलदेहिनामात्मदक्ष् स्वयं भुवि सतां हितायागत प्रभुः. ७०
विधुनिभाननं विश्वपालनं विबुधभूषणं विपुललोचनं
मधुरभाषणं मदनमोहनम् मनसि माणिकं देव धीमहि. ७१
मणिपुरालयं मंजुलोदयं जितजगद्भयं देव मद्भयम्
अजमुखार्चितं सुजनवंदितं मनसि माणिकं देव धीमहि. ७२
कम्बुकन्धरं धीधुरन्धरं रूपसुन्दरं ज्ञानमंदिरम्

योगबंधुरं भोगसागरं मनसि माणिकं देव धीमहि. ७३
त्वन्नामकीर्तनपरास्तु मदीयवाणी त्वन्मूर्तिदर्शनविधौ सततं हि चक्षुः
ध्यानाय देवहृदयं प्रतिजन्मनिस्यादेवं विभो कुरु कृपां तवकिंकरेषु. ७४
ब्राह्मणानां स्तुतिं श्रुत्वा सन्तोषाद्भक्तवत्सलः
सम्मान्य तानुवाचाग्रे प्रहसन् गुरुमाणिकः. ७५

माणिकः—

नैतच्चित्रं हि युष्माकं गुरौ भक्तिर्यदीदृशी
युष्मत्कृतं स्तोत्रमेतद्यः पठेत् स विमुच्यते. ७६
यूयं धन्यतमाः सर्वे दर्शनार्थमिहागताः
दुर्लभं मानुषं लोके त्वद्विधानां समागमः. ७७
इत्युक्त्वा माणिकः प्रादात् सर्वेभ्यो भूषणानिच
वस्त्राणिच दुकूलानि फलादीनि महामनाः. ७८
प्रसादमिति स्वीकृत्य सर्वे संतुष्टचेतसः
पुनः प्रोचुर्महात्मानां दत्तांशं माणिकप्रभुम्. ७९
पृथ्वीभारनिवृत्यर्थं जातस्त्वं माणिकाख्यया
कार्यं कृत्वा याहि गुरो! स्वावतार प्रयोजनम्. ८०
इत्याज्ञां प्रतिगृह्यास्मात् स्वं स्वं धामययुर्द्विजाः
तेषां रूपौदार्यवीर्य लक्षणानि वचांसि च. ८१
श्रुत्वाश्चर्यं गता सर्वे देवा एव नसंशयः
इति भूलोकगा मर्त्याः प्रशशंसुर्महाप्रभुम्. ८२
तदा प्रभुर्महापीठे विरराजामितप्रभुः
भक्ताभीष्टकरः श्रीमान् श्रीविष्णुरिवपालने. ८३
स ब्रह्मचारी धृतधर्मदण्डः सुज्ञानकृष्णाजिन मेखलाश्च

अधीतवेदांतसमस्तविद्य स्तपोधनोऽसौ विरराज भूम्याम्. ८५

इतिश्रीब्रह्माण्डपुराणकथासारे, दत्तात्रेयजन्मपयःपारावारे, श्रीगुरुमहिमावर्णनरत्नावल्यां, माणिक्यविजये, प्रथमभागे, श्रीमाणिक्यप्रभुवरोपनयन कथाप्रस्तावनम् नाम सप्तदशोऽध्यायः



श्रीगुरु अवधूत!

श्रीसद्गुरु माणिक्यप्रभुमहाराजाय नमः!

# श्रीमाणिक्यविजयः

## प्रथमभागः

### अष्टादशोऽध्यायः.

दीनः—

भुवि सुखं विचरंति भवद्विधा मधुरिपाखिललोकहिताय च
भवनिविष्ट जनान्यदहेतुना द्रुतमवंतिगिरामृतसिक्तया. १
अनुभजंति सुराः खलु मानवानुरुभजंति यथैव तथा हितान्
स्वकृतकर्मवशात्तनुकांतिवत् कृपणवत्सल एव भवद्विधः. २
गुरुवस्तुविदां भवादृशां सुकटाक्षां तमहोस्य बंधनम
सवितुः पुरुषस्य चक्षुषो विमलानां हि भवेद्यथा तमः. ३

वद विभोः सुखदामपुनर्भवां श्रवणमोदकरी मखिलात्मनः
अथ कथामुपनीत इहाचरत् कथमसाववनौ गुरुमाणिकः. ४
इति वदंतमभाषि स वत्सलस्त्वमिह धन्यतमः सुधियाङ्गणे
गुरुकथाश्रवणेमतिरीदृशी यदभवत्तव तत्सुकृतं कृतम्. ५



श्रीप्रभोर्मातुलेन बलवंतनाम्ना कृतश्रीगुरुहेळनम्—
तस्मै श्रीगुरुशापप्रदानम्—
सहनूमतो बलवंतस्य देशांतरगमनम्



अथ कदाचिदसौ गुरुमाणिके परमतल्पमनल्पमधिष्ठिते
द्रुतमगादतुलः प्रभुमातुलो प्यसहमानमनास्तमधिक्षिपन्. ६
किमिद ? मेतदसज्जनगायनं जनविडम्बनमेव जडार्भकम्
किमुभवे ? दमुना धनसंग्रहः प्रभुरिवाचरसीह यथेच्छया. ७
जडमते ! पठ पुस्तकमादराल्लभसि तेन गृही सुधनी सुखी
य इह पाति कुटुम्ब मखंडितं स हि पुमान् स सुधीः स पण्डितः. ८
सुतरुणोऽसि विमुग्धवदीहसे हितमिदं हिं ममेति न मन्यसे
तवसमानपयोल्लसदर्भकाः सुसुखयंति पितॄनिह पंडिताः. ९
जडमतिं त्यज दिव्यमनीषया भवकृती सवयस्कजनेषु चे
दिति विनिंद्य स माणिकमग्रतो लिखलिखेति ददौ गुरुपुस्तकम्. १०
तमतदर्हणमीक्ष्य स मातुलं गुरुवरः कलुषीकृतलोचनः
अदहदाशु सुपुस्तकसंचयान् गृहगतानपि सर्वगीश्वरः. ११
हरहरेति शुचा बलवंतकः प्रभुमरे जड नीचलपन्निति
मसमतिं वद वह्निहुतोऽभवत् सकलपुस्तचयः कुलपांसन! १२
रुडहिदुष्टनरः पितरं गुरुम् प्रसुवमाक्षिपति प्रसभं मुहुः
स गुरुहेळनतः पदमापदां द्रुतमुपैति परत्र च दुर्गतिम्. १३

तदुपश्रुत्य वचः सरुषा हसन् गुरुरुवाच विनिंद्य च मातुलम्
प्रभुमयं सकले सचराचरं क इह पाति? जगद्वद दुर्विधम्. १५
स्वपितृमातृगुरुप्रियबांधवाः सुहृदयोऽवतिचात्मसुतानिव
क इह रक्षति? काल उपागते प्रभुरपावृत एव सदागुरुः.
क इह रक्षति? दत्त गुरुम् विना जगदशेषसिदं प्रभुराप्यमयम्
निखिलराजजने जठरंभरिस्त्वमनुसृत्य नटस्तनुमृच्छति. १६
इति रुषाह गुरुर्निजमातुलं त्वसिहगच्छ विपत्पदवीं भृशम्
यत अहंकृतिना प्रभुनिंदनं भवसि तत्फलमेव सदास्तु ते
इति वदन्निरगाद्गुरुमाणिकः स्वनिलयादथ कुण्डलशङ्करं
तदभिधान सुतीर्थजलं स्पृशन्नुपविशत् तरुमूलतले सुखम्



### कुण्डलतीर्थनिकटतिंत्रिणीवृक्षास्थितस्य ब्रह्मराक्षसस्य श्रीप्रभुपादोदकसेचनात् द्विजत्व प्राप्तिः—

### श्रीगुरुचरित्रपठनात् तस्य मुक्तिकथनम्



स हि ददर्शतरोरुपरिस्थितं विपुलवक्त्रविलं द्विजराक्षसं
मलिनदेहमराळविजिह्वकं घननिनाद भयंकरमद्भुतं. १९
निजतनोर्भुवि दर्शयितुं फलं गुरुरुवाच महाद्विजराक्षसम्
त्वसिह कोऽसुर तिष्ठसि? तिंत्रिणी तरुतले सकलानतिबाधयन्. २०
तवपुरः प्रतिवक्तुमहं क्षमः करुणयार्द्रकटाक्षनिरीक्षणात्
समभवं द्विजशापगिराऽसृभुक् तनुरहं कृतिमान् बहुविद्यया. २१
अथ कदाचिदहं द्विजपण्डितानपहसन् किलतर्कमुखागमैः
भृशमनिश्चयमल्पधिया विभो! तदवहेळनपूर्वकमंतिके. २२
मुनिवराः सरुषस्त्वतिनिंदकं जनकमासिह शेपुरघस्पदम्
असुरयोनिमवाप्य च कानने विचर संचितपापचयाकुलः. २३

अथ रुदन् गुरुवर्य मुनीश्वरान्मम गतिः कुत? इत्यहमब्रुवम्
यदि भवद्गुरुमाणिकदर्शनं तदहरेवसुखं तवचास्त्विति. २४
मम कथंनु भवद्गुरुदर्शनं? इति शुचात्र चरामि चिरं गुरो!
सुकृतसंचयवशात् तवदर्शनं समभवत्पतितस्य जडस्य मे. २५
अमृतदे सुखदे च पदेपदे जनक नौमि सदासुदयानिधे!
कुरु कृपां मयि दुर्विषदुर्मदेऽप्यशरणे शरणागतवत्सल! २६
इति वदंत मुवाच स माणिकः पदुदकेन निषिच्य च दानवम्
भव सुखी दनुजत्वमपाकृतं मम वचो न वृथा द्विजपुङ्गव! २७
अपि तथाघघनौघविमुक्तये गुरुचरित्रमलं श्रुणु सादरम्
गुरुवरेण च सिद्धसुयोगिना विकलुषो भवसि क्रमशो द्विज! २८
इति निशम्य विभोर्वचनं मुदा स निरगाद्गतदैत्यवपुश्शुचिः
वसति यत्र नृसिंहसरस्वति स्तमिति देशमपूर्वतपोनिधिम्. २९
गुरुचरित्रजपाच्चरणार्चनात् द्विजवरः समभूद्गतकश्मलः
गुरुवरे करुणेक्षणवीक्षिते किमिह दुर्लभमस्ति नृणां भुवि? ३०
अथ गुरोर्वचनाद्बलवंतकः पदमवाप द्रुतं विपदां मुने!
भुवि चचार शुचा स हनूमता सह सुनिर्मलतीर्थनिषेवणात्. ३१
वरमिदं नरजन्म गुरोः कृपास्पदमभूद्यदि पुण्यवशान्मुने!
य इह आत्महनो भजति ध्रुवं गुरुतिरस्करणान्नरकालयम्. ३२
गुरुपदोदक मेव सुपावनं गुरुवचोऽमृतपानमलं नृणां
गुरुसदेशवसन स हि काशिका परतरं नहि गुरुम् विना. ३३
कलुषवाक्परुषैरुरुपाशकैर्यमपुरीमथ नेतुमिहागते
क्वनु सुरक्षति भीमकरे यमे गुरुकटाक्षमृते भवबाधितम्. ३४
अथ बया गुरुमीक्षितुमागता गृहमनीनयदात्मजभावनात्
रुचिरसां त्ववचोभिरमोघचित् सुखरतं विरतं स्वसमाधिना. ३५

परिजनैर्विरराज स पूर्ववन्निखिलवस्तुगणान् वितरन् मुदा
भजककल्पतरुस्त्वसिति स्तुवत्स्वमरमर्त्यजनेष्विह माणिकः. ३६
चरितमेतदलं प्रपठन्ति ये वरगुरार्द्विजराक्षसताहरम्
सकलभूतगणानहि पीडयंत्यवनतानघसंघयुतानपि. ३७

इतिश्रीब्रह्माण्डपुराणकथासारे, दत्तात्रेयजन्मपयःपारावारे, श्रीगुरु
महिमावर्णनरत्नावल्यां, माणिक्यविजये, प्रथमभागे,
कुण्डलेश्वरनिकटे श्रीमाणिक्यगुरुणा ब्रह्म-
राक्षसस्य मुक्तिकथनं नाम
अष्टादशोऽध्यायः



श्रीगुरु अवधूत!
श्रीसद्गुरु माणिक्यप्रभुमहाराजाय नमः!

# श्रीमाणिक्यविजयः

प्रथमभागः
एकोनविंशोऽध्यायः.

श्रीमाणिक्यप्रभुनरसिंहमुन्योः सहजातयोर्लीलाविवरणम्
श्रीप्रभोरनुग्रहान्नारसिंहमुनेर्योगसाधनं च

वत्सलः—
माणिक्येंद्रं विभुमनुसरन् याति नित्यं नृसिंहः

क्रीडत्यग्रे गुरुवरदया प्राप्तसौख्यो योऽपि बाल्ये
भुङ्क्तेऽजस्रं सगुरुरमलश्चैकपात्रेऽक तल्पे
निद्रातीवार्चयति तमलं लक्ष्मणो राममेत्य. १
यातेऽरण्यं रुदति बहुळं माणिको माणिकेति
प्राप्ते तुष्यत्यमलमनसा योगिवत् पूर्णकामः
वेदांतार्थान् गुरुमवनतः पृच्छतीत्थं वद त्वम्
तूष्णीं भूते लुठति सशिशुर्नारसिंहो मुनींद्रः. २
कोसि त्वं ? मे भुवमुपगतो माणिकाख्योऽतिमर्त्यः
सत्यं ब्रह्मात्मकमिह जनास्त्वां वदंति स दत्तम्
त्वन्माहात्म्यं सुखयति जनानीप्सितार्थैरुदारै
रस्तौद्बालः सगुरुमवदन्माणिकं तद्वदेति. ३
तच्छ्रुत्वा सावजतनुममुम दर्शयन् भीतमूचे
मुग्धोसि त्वं मयि किमु महत्वं गुरुत्वादिकं च
मिथ्याजल्पं त्यपगतधियो दत्तदत्तेति सत्यम्
त्यक्त्वा भ्रांतिं पितृनिलयनं गच्छगच्छेत्यवोचत्. ४
श्रुत्वा पीत्थं गुरुमनुसरन् यातिभक्त्या नृसिंहः
क्रीडन्तौ तौ सकलविभवैरेजतुर्बद्धरागौ
दृष्ट्वा देवा हरीविधियुगं मोदमापुर्भजंतो
सौख्यायेदं कलिजनिखिलप्राणिनामागतं च. ५

॥ श्रीप्रभोरनुग्रहान्नरसिंहमुनेरुपनयनकथाप्रसक्तिः ॥

मातोवाच प्रभुवरमिदं नारसिंहस्यमौंजी
बंध्र भूयात् कथमिति शुचा तेऽग्रजो दूरसंस्थः
भ्रातुर्जाया तवगतवती मुक्तिमाश्व प्रजासौ
नोद्वा होऽभूत् तवपितृऋणान्मुक्तये गोत्रवृद्ध्यै. ६

तस्मान्नाभूत् सुखमिह मम ब्रूहि चिंताकुलायाः
कोऽस्ति? त्राता त्रिभुवनतले त्वां विना दत्तसंज्ञम्
श्रुत्वा मातुर्व्यसनमवनीकल्पवृक्षो विहस्य
ज्ञात्वा सर्वं प्रसुवमवदन्माणिकः सद्गुणौकाः. ७

माणिकः—

का चिंता? ते गुरुरिह सदा पाति भक्तान् स दत्तो
न स्वातंत्र्यं त्वहमिति जनः कर्तृतामेति मातः
सर्वं भूयात् सफलमधुना चिंत्यते यत् त्वया त
द्दत्ते प्रीते किमु मतिमतां दुर्लभं? माशुचस्त्वं. ८
तस्मिन् काले शकटनिहितैर्वस्तुभारैः समागा
द्भक्त्या वैश्यः सहनिजजनैरर्चितुं माणिकेंद्रम्
दृष्ट्वा दूरान्निजनिलयनादागतं चित्रमापुः
सर्वे मातापि च धनिवरं मङ्गळध्वानसंग्रम्. ९
नत्वा प्राह प्रणयरसिको माणिकं वैश्यवर्यो
वृद्धत्वेऽभूद्गुरुकरुणतः सन्ततिर्भाग्यवृद्धिः
दान्योऽहं ते धनचयमिह स्वीकुरु प्राज्ञमौळे!
भक्तं पाहि प्रभुवर! सदा भृत्यभृत्यं तवेति. १०
आशीर्वादं स गुरुवरतः प्राप्य यायात् सबंधु
र्नैजं देशं कृतसुकृतवान् पूर्णकामः सदाभूत्
नामध्यानं चरितकथनं दर्शनं माणिकस्य
प्राप्नोत्यारात् सकलविभवं यस्य लभ्यं स मुक्तः. ११
दत्वा मात्रे धनचयमसौ वस्तुभारं समस्तम्
मौंजीं बंधं कुरुष्व हरेर्बालकस्यामुनांब!
माणिक्योक्त्या मुदितहृदया सा बया तद्गृहीत्वा

चक्रे मौंज्या यदुपकरणं तत्समग्रं सबंधुः. १२
रंभापूगैः किसलयदळैः सद्रसालैर्मनोज्ञै
श्चेक्षुव्रातैः सदनमभितस्तोरणाद्यैस्तदुक्त्या
भूयां चक्रः सकलविभवैर्बंधुवर्गाः सचित्तै
रंगैः सर्वे प्रभुमनुसुधालेपनाद्यैश्च हर्षात्. १३
दृष्ट्वा सर्वं पुनरपि वया चिंतयामास चित्ते
दूरस्थोऽभूत् प्रथमतनयः का चिरं? टीति शोकात्
ज्ञात्वा वृत्तं प्रसुतमवदत् संभ्रमात् स्मर्तृगामी
माणिक्यस्तां मधुरवचसा भाविकार्यं विचिंत्य. १४
मातुः प्रीत्यै सकलतनुगां भ्रातृरूपेण पत्नी
युक्तेनासौ विनतिमकरोत् पादयोर्भक्तिनम्रः
दृष्ट्वा सा तौ विमलमनसा दंपती प्राह वाक्यम्
कस्मात् पुत्र! त्वमिह कथमायात? इत्यश्रुपूर्णा. १५
भ्रातृस्नेहात् तवहृदयगं हर्तुकामः समीपम्
प्राप्तः पत्न्या सह जननि! मे देह्यनुज्ञां सुतस्य
माणिक्येंद्रे तवनिकटगे पूर्णतां याति सर्वम्
यास्यं तस्य व्रतसुसमयं त्वापसौतर्धिमुक्त्वा. १६
नायं ज्येष्ठः खलु गुरुमतिः सर्वरूपी समागा
त्मन्मोदार्यैत्विह किल मृतायाति किं? मे स्नुषापि
पुत्रं मत्वा सततमभवं मूढधीर्माणिकाख्यम्
ध्यात्वा पूर्वं सकलचरितं साथ तत् त्याज शोकम्. १७
ब्रह्मांडं मे शिशुरपि जले दर्शयामास पूर्वम्
श्रुत्स्वांत्यर्थं सदनमखिलैः पूरयामास धान्यैः
लक्ष्मीं दत्वा द्विजवरमलं तोषयन्माणिकाख्यः

सत्संतानं फलकपटतः सस्त्रियै दत्तवांश्च. १८
गोपार्भं तं मृतमनुगतो जीवयत् पत्युरग्रे
विष्णोर्मूर्तिं ह्युरगशयनां दर्शयामास दत्तः
शिक्यं भुक्त्वा स्वयमुपगतायार्थिनेऽदात् सुमृष्टम्
सोमस्यांते निजजलयुतश्चान्नमेषः परात्मा. १९
मुक्तोऽभूद्यत्पदकमलवास्सेचनाद्ब्रह्मदैत्यः
सूतागारेऽप्यदशमहमीशात्मकं दत्तरूपम्
श्रुत्वा पीदं मम सुत इति भ्रांतिराप्नाति नित्यम्
दैवीमाया विधिमुखसुरैर्दुर्विलंघ्या नृणां किं? २०
माणिक्येंद्रे नृमतिमजहत सा बयेत्थं विदित्वा
विप्रैर्लग्नम् ग्रहबलयुतं निश्चयामास मौंज्याः
सर्वैर्वाद्यैरनुजसहितः सद्गुरुर्मंगळाख्यम्
स्नानं कृत्वा धृतसुवसनः स स्थितो वेदिकायाम्. २१
पुण्याहादीन् स्वकुलगुरुणा कारयामासुरार्याः
शुद्धे लग्ने गुरुरुपदिश ह्येदधात्रीं मनोज्ञां
ब्राह्मीमेनामनुजमवश स्वांकमारोप्य कर्णे
घोषत्स्वार्थेष्वखिलनिगमेर्माणिको नारसिंहम्. २२
गायत्र्यासौ तरणिरिव सन्दीप्ततेजा विरेजे
त्रैमूर्त्यात्मा जितध्वतमाः कर्मसाक्ष्यात्मचक्षुः
सद्वृत्ताढ्यः खलु गुरुनति प्रीत अम्भोजजाता
नंदः श्रीमान् सकलरुचिभिर्नारसिंहस्तदग्रे. २३
मृष्टान्नाद्यैर्द्विजगणां स्तोपयामास देवो
नानादानैर्भुवमुपगता कामधेनुर्गुरुर्वा
इत्थं नित्योत्सवसुखचयैः क्रीडयामास सर्वैः

माणिक्यंशो हरिरिव सदा खेसुरैस्तापसेंद्राः. २४
मौंजीबंधात्मकमिपमलं नारसिंहस्य वृत्तम्
ये गायंति प्रतिदिनमिह प्राप्नुवंत्याशु भाग्यम्
माणिक्येंद्रो भवति वरदो ते पठंत्यार्द्रभक्त्या
मुक्तिं कामानखिलफलदान् श्रावयंत्येव तेषाम्. २५

इतिश्रीब्रह्माण्डपुराणकथासारे, दत्तात्रेयजन्मपयःपारावारे, श्रीगुरुमहिमावर्णनरत्नावल्यां, माणिक्यविजये, प्रथमभागे, नृसिंहस्योपनयनकथाभिवर्णनं नामैकोनविंशोऽध्यायः



श्रीगुरु अवधूत!
श्रीसद्गुरु माणिक्यप्रभुमहाराजाय नमः!

# श्रीमाणिक्यविजयः

प्रथमभागः

## विंशोऽध्यायः.

नमः परस्मै देवाय माणिक्याय महात्मने
येन सृष्टमिदं तस्मै रक्षितं संहृतं जगत्. १

वत्सलः—

यत् पृष्टं सर्वमाख्यातं दत्तवंशानुवर्णनम्
सर्वेषां पापशमनं युष्माभिस्तन्मुनीश्वराः. २
सूतस्य शौनकादीनां प्रश्नोत्तर निरूपणम्
सूतोपदेशतश्चास्मिन युगे संचरणं मम. ३
मैलारक्षेत्रगमनं भवतां दर्शनं तथा
दत्तात्रेयस्य जननं तत्प्रभावप्रदर्शनम्. ४
व्यासस्यासितयोगस्य चावतारकथा शुभा
शङ्कराचार्यवर्यस्य चोत्पत्तिकथनं तथा. ५
श्रीपादश्रीवल्लभस्य नृहरेर्यतिरूपिणः
अवतारकथाचैव तयोश्चारित्रमद्भुतम्. ६
भार्गवस्य च चारित्रं तद्दासस्य महात्मनः
भावुनाम्नः सुचरितं केशवस्यामितौजसः. ७
तत्पुत्रस्य नृसिंहस्य वर्तनं लोकमङ्गलम्
अव्यंजस्य पुण्यस्य मनोहरसुयोगिनः. ८
बयाप्रभावो समोऽस्या अनसुयांशकारणम्
हनूमद्वरदानाच्च हनूमद्वैभवोन्नतिः. ९
श्रीमाणिक्यप्रभोर्दिव्यचारित्रं परमाद्भुतम्
श्रीप्रभोर्बाललीलादिकथा परमपावनी. १०
भक्तकल्पद्रुमादीनां माहात्म्यं श्रीगुरोः शुभम्
मनोहरस्य महिमावर्णनं परमाद्भुतम्. ११
नृसिंहस्य समुत्पत्तिः ब्रह्मांशस्य महात्मनः
कथा हृदयलालस्य तस्य योगादिसाधनम्. १२

मनोहरस्य वैकुण्ठगमनं मुक्तिसाधनम्
श्रीमाणिक्यप्रभोर्मौंजीबंधनं सर्वसौख्यदम्. १३
ब्रह्मराक्षसमुक्तिश्च कुण्डलेश्वरसन्निधौ
नृसिंहस्योपनयनं भवसागरतारणम्. १४
एवमादीनि सर्वाणि चारित्राणि महांति च
वर्णितानि मया विप्राः सर्वपापहराणि च. १५
यथा श्रुतं मया सूतमुखात् तदनुतापसाः
तत्सर्वं वर्णितं युष्मन्निकटे तत्प्रसादतः. १६
इदं पवित्रं पापघ्नम् कलिकल्मषनाशनम्
अज्ञाननाशकंचैव सर्वसिद्धिप्रदायकम्. १७
अष्टम्यां सोमवारे च श्रावण्यां गुरुवासरे
मार्गशीर्षे तथा दत्तजयंत्यां भानुवासरे. १८
उदुम्बरतरोर्मूले श्रीगुरुक्षेत्रसन्निधौ
सङ्गमे विरजायाश्च वृषजाया विशेषतः. १९
गुरुप्रतिपदीशादिदेवानां निकटे तथा
श्रीमाणिकस्य निकटे नियता विजितेंद्रियाः. २०
ये पठन्ति नरा नित्यं तेषां वच्मि फलं श्रुणु
सर्वतीर्थावगाहेन यत्फलं लभते नरः. २१
शताश्वमेधयागेन तुलादानेन यत्फलं
गवां कोटिप्रदानेन कोटिकन्याप्रदानतः. २२
तत्फलं समवाप्नोति नात्र कार्याविचारणा
किमत्र? बहुनोक्तेन श्लोकार्धेन ब्रवीम्यहम्. २३
यं यं कामयते कामं तं तमाप्नोति दुर्लभम
श्लोकार्धे श्लोकपादं हि माणिक्यस्य कथोद्भवम्. २४

यच्छ्रृणोति नरो भक्त्या तस्य जन्म न विद्यते
वसत्यस्य मनस्यार्यो माणिक्यो मुक्तिदायकः. २५
कलिमलमपहर्तुं तत्त्वमार्गं प्रदेष्टुं
सकलमतवितान स्थापनार्थं हि दत्तः
विधिसुरवरमुख्यैर्भूतलेऽसौ विहर्तुम्
समभवदघदूरो माणिकाख्योऽवतारः. २६
यं देवा मुनयश्च यज्ञनिवहे ध्यायंति रत्नाभिधम्
वेदैः सांगपदक्रमोपनिषदैरग्नींद्रसूर्यात्मकम्
भूम्यंब्वग्नयनिलांबरादितनुमित्यब्जोद्भवाजेशास्त्र
द्रूपं ब्रह्म परात्परं प्रणवगं श्रीमाणिकं तं भजे. २७

इतिश्रीब्रह्माण्डपुराणकथासारे, दत्तात्रेयजन्मपयःपारावारे, श्रीगुरुमहिमावर्णनरत्नावल्यां, माणिक्यविजये, प्रथमभागे, पूर्वकथानुवर्णनं ग्रंथश्रवणफलनिरूपणंच नाम विंशोऽध्यायः

प्रथमभागः समाप्तः



# शुद्धाशुद्धपत्रिका

| पुट | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| | | पीठिकायां | |
| i | ११ | वासब | वासव |
| ii | ५ | श्री | श्री |
| iv | १६ | योगादिषु | यागादिषु |
| | | गद्ये | |
| २ | १७ | सुहुर्मुहु | मुहुर्मुहु |
| | | माणिक्यविजयं | |
| १ | १३ | राजत्प्य | राजत्यप्र |
| २ | ९ | दीनालि | दीनालि |
| ३ | १३ | पुराणोषु | पुराणेषु |
| ,, | १९ | गावौ | गाल्वौ |
| ,, | २५ | ग्रहत | ग्रहतो |
| ४ | ९ | क्रियां | क्रिय |
| ,, | १२ | धर्य | धर्म |
| ५ | १७ | सर्रे | सर्वे |
| ,, | २७ | व्रह्मण्ड | ब्रह्माण्ड |
| ७ | १७ | सर्रोत्तमं | सर्वोत्तमं |
| ,, | २२ | समसूत् | समभूत् |
| ८ | १४ | सर्रे | सर्वे |
| ,, | १६ | सर्रसिदं | सर्वसिदं |
| ,, | १७ | सर्रेषामपि | ः वेषामपि |
| ,, | १८ | तेजवीजस्तथा | तेजोवीजं तथा |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ८ | २४ | व्यप्तं | व्याप्तं |
| ९ | ८ | हत्यन् असाधुकृत्यन् | हत्यान् असाधुकृत्यान् |
| ,, | ११ | तवस्तु | तथास्तु |
| ९ | २४ | संसाचक्र | संसारचक्र |
| ,, | २८ | ऽनोत्र | ऽन्योत्र |
| १० | १ | सर्रे | सर्वे |
| ,, | ७ | रानचितुं | रानर्चतुः |
| ,, | ९ | मौकौ | मूकौ |
| ,, | १० | प्रस्तूतं | प्रभूतं |
| १२ | ४ | यस्तत् | यस्मात् |
| ,, | ७ | तत्समरस्यं | तत्सामरस्यं |
| ,, | ८ | प्रकंप्य | प्रकंप्यः |
| १२ | १० | तददितो | तदर्थितो |
| १५ | ८ | स्त्वप | स्त्वस |
| ,, | १८ | उच्छस्थितं | उर्ध्वस्थितै |
| | | सहीच्चचच्छद्भूततिथ्यम् | सहोग्रच्छद्भूततिथ्याम् |
| ,, | २४ | दिवत् | दितिवत् |
| १७ | ९ | धुष्माक | धुष्माकं |
| १८ | १४ | कठांतर्ण | कठांतार्ण |
| १९ | ९ | नारदं | सादरं |
| ,, | १३ | लत्यत्व | सत्यत्व |
| २० | २० | भंधो | बंधो |
| २१ | ११ | तत्त्वान्तं | तत्त्वास्ते |
| ,, | १३ | ध्यस्ने | ध्यासे |
| ,, | १८ | शाम्यं ध्यान | शाम्येद्ध्यान |
| ,, | २२ | समाधित्वा | समाधिर्वा |
| २२ | ८ | किंचिदन्य | किंचिदन्य |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २२ | २५ | याद्यापि | याद्धापि |
| २३ | ४ | नीवृत्तः | निवृत्तः |
| २३ | १९ | अत्रि | अत्रिः |
| २४ | १५ | स्वसति | स्वसती |
| २५ | १ | त्वज्जननः | त्वज्जन्मनः |
| ,, | ७ | कलावपि | कलावपि |
| ,, | ९ | विंत | वित |
| २६ | २ | पृम्थ्यां | पृथ्व्यां |
| ,, | ३ | मौनि | मौनी |
| ,, | १० | तांशज | तांशजः |
| २६ | २३ | स्यष्टा | न्यष्टा |
| २८ | ७ | अवतार | अवतारः |
| ,, | ९ | ब्रूहि | ममब्रूहि |
| २९ | १ | मार्तैश्च | मार्यैश्च |
| ,, | १९ | गोपनीयः | गोप्नीयं |
| ३० | ५ | सिश्रा | सिश्राः |
| ,, | ११ | शल्यभूता | शल्यभूताः |
| ३१ | ११ | सिश्रा | मिश्राः |
| ,, | २८ | भासै | भानै |
| ३२ | १४ | समंतं | नमंतं |
| ३३ | ३ | प्रती | प्रति |
| ,, | ६ | विविधै | विंविधै |
| ,, | २० | श्चार्यांक | श्चावांक |
| ३६ | १७ | ब्रह्मवर्त्त | ब्रह्मावर्त |
| ,, | १८ | गोकुनं | गोकुलं |
| ३७ | ११ | पंच | पंचा |

| पुट | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३८ | १० | मींचया | मोंचया |
| ,, | १८ | बहुष्वति | बहुष्वती |
| ,, | २१ | स्म्यं | रम्यं |
| ३९ | १९ | भीन | भिन |
| ४० | ११ | लक्ष्म्य | लक्ष्म्या |
| ,, | २१ | मुनीः | मुनिः |
| ४१ | २३ | परं | वरं |
| ४२ | ११ | प्रदयिना | प्रदायिना |
| ४३ | १२ | तद्धि | त्वद्धि |
| ४४ | २१ | स्नात्वा | स्नात्वा |
| ४५ | २ | सहीत | सहित |
| ४६ | ५ | धरा | धरां |
| ,, | ६ | पंक | पंचक |
| ४८ | ,, | भूमौ | भूमौत्वया |
| ४९ | ,, | रुद्र | रुद्र |
| ५१ | १२ | नृलिंह | नृसिंह |
| ५२ | ३ | नेवा | सेवां |
| ,, | १० | मन्या | [illegible]न्या |
| ५३ | २० | सुचे | नूचे |
| ५४ | २ | वर | वरा |
| — | ८ | सखयं | सुखयं |
| — | — | मनोज्ञम् | मनोज्ञाम् |
| — | १० | भर्तु | भर्तुं |
| — | १७ | विस्मियाचे | विसयोचं |
| ५५ | ४ | क्रमुके | क्रमुके |
| — | १९ | दान्ये | दास्ये |

| पुट | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५६ | १४ | समास्यात्र | समाप्यात्र |
| ,, | २२ | मुपक्रमंत | मुपाक्रमंत |
| ,, | २४ | मुक्तै | मुक्त्यै |
| ५८ | ८ | सती | नती |
| ,, | १२ | पोषा | घोषा |
| ६० | ६ | छेतसा | चेत सा |
| ,, | १० | ममता | मयते |
| ६२ | २ | झैशव | शैशव |
| ६३ | ,, | दुर्मार्ति | दुर्मृति |
| ६५ | ४ | योगादि | यागादि |
| ६६ | १८ | ब्रह्मे | ब्रह्मे |
| ७० | १५ | दान्ये | दास्ये |
| ७३ | २३ | विनयास्म | विनयान्म |
| ७५ | १३ | भक | भव |
| ७७ | १४ | दान्यें | दास्ये |
| ,, | १८ | स | नः |
| ७८ | १५ | यथंच्छहा | यथेच्छया |
| ७९ | [illegible] | सेनैव | स्तेनैव |
| , | १६ | धन्मा | धन्या |
| ,, | २४ | प्रशासं | प्रशंसां |
| ८१ | ५ | मात्यैं | मार्यै |
| ,, | २० | त्वसिह | त्वसिव |
| ,, | २३ | प्रार्थयेतुं | प्रार्थयेभं |
| ८३ | ५ | स्वागनं | स्वागतं |
| ८४ | २ | पात्र | प्रात |
| ८४ | ८ | प्रदान्यंस्नै | प्रदास्यंस्मै |

| पुट | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ८५ | ४ | दान्ये | दास्ये |
| ,, | १४ | पुरस | पुंस |
| ,, | १८ | वंदितं | नंदितं |
| ८८ | १४ | नोलंघ्य | नोल्लंघ्य |
| ,, | १५ | बोधकः | बाधकः |
| ८९ | २ | रंद | वेद |
| ९० | १४ | बह्ववशुभानि | बह्वशुभानि |
| ९१ | १२ | पाद्रु | प्राद्रु |
| ९४ | १ | मुकि | मुक्ति |
| ९५ | १२ | दुस्सहं | दुस्सहां |
| ९६ | ,, | मोहमानौ | मोहामानौ |
| ,, | १७ | दस्त्यैव | दस्त्येव |
| ९७ | ३ | प्रगृह्यत्र | प्रगृह्यात्र |
| १०० | १६ | तद्वचनं | त्वद्वचनं |
| १०१ | २ | वेदसंपन्नाः | वेदसंपन्नान् |
| १०४ | ६ | प्राप्त्ये | प्राप्त्यै |
| ,, | २४ | भवति | भवन्ति |
| १०५ | १३ | शतश | शतशः |
| १०९ | १४ | महात्मानां | महात्मानं |
| ,, | १९ | गता | गताः |
| ,, | २१ | प्रभुः | प्रभः |
| १११ | ६ | गुरु शाप | गुरु कृत शाप |
| ,, | १३ | स पंडितः | स च पंडितः |
| ११३ | २० | नहि गुरुम् | नहि वस्तु गुरुम |
| ११६ | १६ | दान्ये | दास्यं |




# प्रकटणे

नम्मल्लि विकरिगे सिद्धवागिरुव श्रीमाणिक्यप्रभु
सांप्रदाय ग्रंथगळुः—

(नागरलिपि)

| | | | |
|---|---|---|---|
| १. श्रीमाणिक्यविजय (प्रथमभाग) | रू. | ० | १२ |
| २. ,, (द्वितीयभाग) | | | |
| (अध्बिनल्लिधे) | | १ | ४ |

(तेलुगुलिपि)

| | | |
|---|---|---|
| १. माणिक्यविजय (संपूर्णग्रंथ) | २ | ० |
| २. श्रीमाणिक्यप्रभुगळिंद रचितवाद वारभजने | ० | ८ |
| ३. श्रीप्रभुत्रयकृत पद्यमाला, निर्विकल्पबोध, महा मौन शतक, आत्मरूपप्रतीति, अनिर्वाच्य, श्री गुरुसांप्रदाय, (पल्लवु सेरि ओंदे संपुट) बेले | १ | ८ |
| ४. श्रीमनोहरमुनि प्रणीत नित्यकर्मावळि, सहस्र नामावळि (एरडू सेरि) बेले | १ | ८ |
| ५. बप्पाचार्यकृत श्रीमाणिक्यप्रभाकर | ० | ८ |
| श्रीमाणिक्यप्रभुमासपत्रिके (वार्षिकचंदा) | २ | ० |

श्रीमाणिक्यप्रभुमुद्रणालय,
शंकरगिरि, आस्परि पोस्ट्,
(बळ्ळारि जिल्ला.)